श्री काशी संस्कृत ग्रन्थमाला १६

श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यप्रणीत-
सिद्धान्तमुक्तावलीसहिता

# कारिकावली

यतिवर-नारायणतीर्थविनिर्मितन्यायचन्द्रिकासमवेता च

सा चेयं
काशीस्थतर्कतीर्थोपाध्यलङ्कृतबटुकनाथशास्त्रिणामात्मजेन
न्यायोपाध्यायढुण्ढिराजशास्त्रिणा कृतया
मुक्तावलीविषमस्थलटिप्पण्या समेता,
तेनैव संशोधिता च







**चौखम्भा संस्कृत संस्थान**
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बा० नं० १३९
जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

॥ श्रीः ॥

# काशी संस्कृत ग्रन्थमाला

१६



श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यप्रणीत-
सिद्धान्तमुक्तावलीसहिता

# कारिकावली

यतिवर-नारायणतीर्थविनिर्मितन्यायचन्द्रिकासमवेता च

सा चेयं

काशीस्थतर्कतीर्थोपाध्यलङ्कृतवटुकनाथशास्त्रिणामात्मजेन
न्यायोपाध्यायढुण्ढिराजशास्त्रिणा कृतया मुक्तावली-
विषमस्थलटिप्पण्या समेता, तेनैव संशोधिता च






## चौखम्भा संस्कृत संस्थान

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पो० आ० चौखम्भा, पो० बा० नं० १३९

जड़ाव भवन; के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी (भारत)

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी
मुद्रक : विद्याविलास प्रेस, वाराणसी
संस्करण : द्वितीय, वि० संवत् २०३८
मूल्य : रु० २५-००







अन्य प्राप्तिस्थान

१. चौखम्भा ओरियन्टालिया
पो० बा० नं० ३२
गोकुल भवन, के. ३७/१०९, गोपाल मन्दिर लेन
वाराणसी-२२१००१ ( भारत )
टेलीफोन : ६३३५४ टेलीग्राम : गोकुलोत्सव

शाखा—बंगलो रोड, ९ यू० बो० जवाहर नगर
दिल्ली-११०००७ फोन : २२१६१७

२. चौखम्भा विश्वभारती
पो० बाक्स नं० १३६
चौक (चित्रा सिनेमा के सामने)
वाराणसी-२२१००१ ( भारत )
फोन : ६५४४४

३. चौखम्भा भारती अकादमी
के. ३७/१०९, गोकुल भवन
गोपाल मन्दिर लेन
वाराणसी-२२१००१
फोन : ६३३५४

THE

KASHI SANSKRIT SERIES

16

*****

# KĀRIKĀWALĪ

*With two Commentaries*

SIDDHĀNTA MUKTĀWALĪ

of

Vishwanātha Nyāya Pañchānana,

and

NYĀYACHANDRIKĀ

by

PANDIT ŚRĪ NĀRĀYANA TĪRTHA

Edited with Notes by Pandit Dhuṇḍhirāj Śāstrī
Nyāyopādhyāya and Kāvyatīrtha.

CHAUKHAMBHA SANSKRIT SANSTHAN

*Publisher and Distributor of Oriental Cultural Literature*

P. O. Chaukhambha, P. Box No. 139

Jadau Bhawan, K. 37/116, Gopal Mandir Lane

VARANASI ( INDIA )

Second Edition 1981

Price : Rs. 25-00

Phone : 65889

*Also can be had of*

1. CHAUKHAMBHA ORIENTALIA
   Post Box No. 32
   Gokul Bhawan, K. 37/109, Gopal Mandir Lane
   VARANASI-221001 ( India )
   Telephone : 63354 Telegram : Gokulotsav

   **Branch**—Bungalow Road, 9 U. B. Jawahar Nagar
   DELHI-110007
   Phone : 221617

2. CHAUKHAMBHA VISVABHARATI
   Post Box No. 139
   Chowk ( Opposite Chitra Cinema )
   VARANASI-221001
   Phone : 65444

3. CHAUKHAMBHA BHARATI ACADEMY
   Gokul Bhawan, K. 37/109
   Gopal Mandir Lane
   VARANASI-221001 ( India )
   Phone : 63354

# भूमिका ।

इह खलु जगति सकलपुमर्थसाधकेषु शास्त्रपुञ्जेषु न्यायवैशेषिकाख्यं दर्शनशास्त्रमेव श्रेष्ठमित्यत्र—

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश । ( मनुः )
'न्यायो मीमांसा धर्मशास्त्राणि' ॥ ( आत्मोपनिषद् )

इत्यादीनि श्रुतिस्मृतिवाक्यान्येव प्रमाणानीति न्यायवार्तिकभूमिकायां स्वर्गस्थैः श्रीमद्विन्ध्येश्वरीप्रसादद्विवेदिभिः सम्यक् प्रतिपादितम् । अस्यैव च शास्त्रस्य–श्रवणात् अनु पश्चात् ईक्षनं मननं तन्निर्वाहिका आन्वीक्षिकी–तिव्युत्पत्त्याऽऽन्वीक्षिकीतिव्यवहारः सर्वत्रोपलभ्यते । अस्य शास्त्रस्य प्रशंसाप्युक्तभूमिकायां सविस्तरमुक्तेति नात्रेतिहासतत्त्वानभिज्ञेन मया प्रयत्यते । तच्चेदं शास्त्रं प्रमाणप्रमेयादिशोडषपदार्थव्युत्पादक गौतममहर्षिप्रणीत न्यायाख्यया—द्रव्यादिसप्तपदार्थप्रतिपादकं च वैशेषिकसंज्ञयाऽभिधीयते । अनयोश्चाविरोधः ( प्रशस्तदेवाचार्येण प्रशस्तपाद भाष्ये ) विश्वनाथन्यायपञ्चाननेन च मुक्तावल्यां स्वयमेवोक्त इति नाव्यक्तं न्यायवैशेषिकलवविदुषामपि मुक्तावलीसंस्तुतानाम् । अस्याश्च मूलं कारिकावलीत्यपरपर्यायो भाषापरिच्छेदस्तेनैव कृत इत्यपि—

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥

इति प्रेक्षावत्प्रवृत्तिजनकार्थबोधककारिकायां स्वयं विवेदितम् । स चायं न्यायपञ्चाननमहोदयः गौतमसूत्रवृत्तिकाराच्चान्यः । वङ्गदेशीयपण्डितधुरीणोऽयं न्यायपञ्चाननोपाधिसमलङ्कृतः श्रीविद्यानिवासभट्टाचार्यसूनुर्नैयायिकचूडामणिः कणाददर्शनाम्बुधिं मथ्नन् तत्सारभूतायां मुक्तावल्यां यथा प्राचीनार्वाचीनयोर्मतयोः समावेशं कुशाग्रमत्या व्यदधात्तथा मुक्तावल्यध्येतॄणां विदितमेव । अस्य च समयस्तत्कृतन्यायसूत्रवृत्तिस्थान्तिमवृत्ते:—

रसबाण(र?)तिथौ शकेन्द्रकाले बहुले कामतिथौ शुचौ सिताहे ।
अकरोन्मुनिसूत्रवृत्तिमेतां ननु वृन्दाविपिने स एष विश्वनाथः ॥

इत्यत्र १५५६शकाब्दः(१५७६शकाब्दो वा)सम्प्रदर्शितः। यद्यपि मुक्तावलीसूत्रवृत्त्योः का प्रथमेति निर्धारणे न किमपि प्रमाणमुपलभ्यते, तथापि शास्त्रान्तरानुल्लिखितस्यैतच्छास्त्रीयप्रधानविषयस्य मंगलवादस्य विश्वनाथकृतिना मुक्तावल्यां सम्यक् विवेचितस्य न्यायसूत्रवृत्तौ संक्षिप्य प्रदर्शनं कृतमिति मुक्तावल्येव यवीयसीति गम्यते । कारिकावलीव्याख्यानापदेशेन प्रशस्तपादाद्यभिप्रेतोऽपि विषयः क्षणप्रक्रियादिः—प्रासङ्गिकश्च मीमांसाव्याकरणादिषु प्रथितोऽतीवोपयोगी यथा ग्रन्थकर्त्रा सन्निबद्धस्तदपि न विस्मर्तव्यम् ।

सत्यप्येतादृशि व्याख्याने यतिवरेण नारायणतीर्थेन पुनरप्येषा कारिकावली चन्द्रिकाभिधया व्याख्यया द्विगुणितं प्रद्योतितेति चन्द्रिकां सादरं पिबतां न्यायरहस्यदत्तचित्तानां चित्ते स्वत एवाविर्भविष्यति । अयं च नारायणतीर्थश्चन्द्रिकां निबध्नन् प्रायशो मुक्तावल्यनिर्दिष्टान् कारिकाव्याख्येयांशान् स्वतन्त्रांश्च विचारान् प्रदर्शयन्न्यूनतामेव मुक्तावल्याः कर्तुं प-

रिकरं प्रबन्धं । प्रासङ्गिकांश्चांशान् पदकृत्यजातं च यथाशक्ति शिष्यबुद्धिवैशद्यार्थं व्यनक्ति स्म, यथा—नूतनजलधरेत्यादिकारिकाव्याख्यानावसरे नमःशब्दार्थः नूतनेत्यादिविशेषणसार्थक्यं च शिष्यजिज्ञासाविषयं विश्वनाथेन परिहृतमपि कौशलेन निबद्धम् । मङ्गलवादस्तु पौनरुक्त्यभिया परित्यक्तः । ईश्वरानुमानन्तु व्याप्त्याकारप्रदर्शनपुरस्सरं दत्तमित्यंशतः कुत्रचिद्विशेषो विहितः । लघुत्वमृदुत्वादीनां प्रकृतगुणेष्वन्तर्भावस्य वर्णनं—सामान्यपदेनैव 'नित्यमेकमनेकानुगतमि'त्याद्याकरग्रन्थोक्तलक्षणस्य लाभ इति प्रतिपादनं च न्यायशास्त्रव्युत्पित्सूनां हितकरमिति दृष्ट्वा कस्य विदुषो मनसि प्रमदो न जायेत । कारिकावलीरहस्यांशवर्णनं विदधताऽनेनैव कारिकायामवश्यं वाच्या—

'यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः' । इत्यस्यानन्तरं—

'गोत्वादि साध्ये हेतुर्हि यत्राश्वत्वादिको भवेत्' ॥

इत्युदाहरणकारिकांशाः प्रपूरिता इति तु महच्चमत्कारकारणं भविष्यति ग्रन्थयोजनाशैलीकोविदानां विपश्चिद्वर्याणाम् । आत्मनिरूपणप्रकरणे शरीरादेरात्मत्वनिरासावसरे प्राणात्मवादखण्डनं क्रमप्राप्तं निरूपयता चन्द्रिकाकारेण मुक्तावलीरचयितुर्विश्वनाथस्योपरि यः कटाक्षनिक्षेपः सूचितः सोऽप्याश्चर्यजनक एव ।

स चायं नारायणयतिः कः कदा वाऽऽसीदिति जिज्ञासापनोदाय तच्चरितमन्वेषयता मया तत्कृतसांख्यकारिकावृत्तौ चन्द्रिकाभिधायामुपलब्धस्यान्तिमश्लोकस्य प्रदर्शनेन श्रीरामगोविन्दतीर्थकृपालब्धविद्यः वासुदेवपण्डितानां शिष्यः दर्शनशास्त्रेऽतिपटुः कश्चनैतद्देशीय एव पण्डित इत्यनुमीयते । अस्य तु सं० १७५८ विक्रमाब्दः समयो निर्धारितः । अनेन च न्यायदर्शने कु-

कुसुमाञ्जलिकारिकाटीका—वेदान्ते सिद्धान्तबिन्दुव्याख्या—योगे योगसिद्धान्तचन्द्रिका च निर्मिता । इदं च काशीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षपं०श्रीगोपीनाथकविराजमहोदयकृपयैव उक्तग्रन्थकर्तृजीवनं मयोपलब्धम् अन्यथैतदुल्लेखो मम कथमपि न साध्यः स्यात् ।

तामिमां सिद्धान्तमुक्तावली—न्यायचन्द्रिकाख्य—व्याख्याद्वयोपेता कारिकावली न्यायशास्त्राध्ययनरसिकानान्तत्र पटुतामिच्छतामत्यन्तोपकारकारिणीं निर्धार्य काशीस्थ बाबु–गोविन्ददासमहाशयैः प्रोत्साहितोहं श्रीमद्विन्ध्येश्वरीप्रसादद्विवेदिभिर्दत्तं प्रायशः शुद्धं न्यायचन्द्रिकायाः पुस्तकमेकमेवावलम्ब्य स्थूलतमाक्षरैः कारिकावलीं स्थूलाक्षरैश्चन्द्रिकां सूक्ष्माक्षरैर्मुक्तावलीं सूक्ष्मतराक्षरैश्च मुक्तावलीविषमस्थलटिप्पणीं निवेशयन् यथामति संशोध्य प्रकाशयन् संभावये भविष्यतीयं सकलन्यायदर्शनरसिकमनःसन्तोषकारिणीति ।

अस्यां च मदीयबुद्धिमान्द्येन सीसकाक्षरयोजनादोषेण चोपनता अशुद्धीः क्षाम्यन्तो गुणैकदृष्टयो विद्वांसः आस्वादयन्तु मुक्तावलीचन्द्रिकयोः प्रकाशम्, प्रसीदतां चानेन प्रयासेन सर्वान्तर्यामी भगवान् काशीपतिरिति प्रार्थयते—

संवत् १९८०
आश्विन कृ० ४ शनौ

विद्वदनुचरः—
न्यायोपाध्यायो ढुण्ढिराजशास्त्री ।

व्याख्याद्वयसमेतकारिकावल्या

# विषयानुक्रमणिका ।


| विषयः । ( द्रव्यग्रन्थे उद्देशविभागयोः स्थलम् ) | पृ. | ०पं |
|---|---|---|
| कारिकावलीमङ्गलम् । ... ... | १ | ७ |
| मुक्तावलीमङ्गलम् । ... ... | ,, | १० |
| प्राच्यमङ्गलवादः । मु० ... ... | ,, | १९ |
| नव्यमङ्गलवादः । मु० ... ... | २ | ८ |
| ईश्वरसिद्धिः । मु० ... ... | ३ | १ |
| चन्द्रिकामंगलम् । ... ... | ,, | ९ |
| नूतनेत्यादिकारिकाव्याख्यानम् । चं० ... | ,, | ११ |
| पदार्थविभागः । का० ... ... | ४ | ९ |
| शक्तिसादृश्ययोः सप्तस्वन्तर्भावः । मु० ... | ,, | १६ |
| पदार्थकथने हेतुः । चं० ... ... | ५ | ५ |
| पदार्थसामान्यलक्षणं सप्तपदार्थकथनञ्च । चं० ... | ,, | ७ |
| द्रव्यविभागः । का० ... ... | ,, | १७ |
| द्रव्यत्वजातिसिद्धिः । मु० ... ... | ,, | २२ |
| तमसो द्रव्यत्वनिरासः । मु० ... ... | ,, | २५ |
| क्षित्यप्तेज इत्यादिकारिकार्थः । चं० ... ... | ६ | ७ |
| द्रव्यसामान्यलक्षणानि । चं० ... ... | ,, | १५ |
| गुणविभागः । का० ... ... | ,, | १६ |
| चतुर्विंशतिशब्दार्थः । चं० ... ... | ७ | ४ |
| लघुत्वमृदुत्वादीनामुक्तगुणेष्वन्तर्भावः । चं० ... | ,, | ५ |
| गुणसामान्यलक्षणानि । चं० ... ... | ,, | ७ |
| कर्मविभागः । का० ... ... | ,, | १० |
| उत्क्षेपणाद्यर्थः । चं० ... ... | ,, | १५ |
| कर्मसामान्यलक्षणानि । चं० ... ... | ,, | १९ |
| भ्रमणादीनां गमनेऽन्तर्भावः । का० ... ... | ७ | २२ |

| विषयः । | | पृ० | पं० |
|---|---|---|---|
| सामान्यविभागः सत्ताख्यपरजातिकथनञ्च । का० मु० | | ८ | १ |
| सामान्यलक्षणम् । मु० | ... ... | ,, | ३ |
| जातिबाधकसंग्रहः । मु० | ... ... | ,, | ९ |
| परत्वादिव्युत्पत्तिः । मु० | ... ... | ,, | ११ |
| सामान्यशब्दार्थः । चं० | ... ... | ,, | १४ |
| लक्षणानुमानयोः सामान्यपदेन लाभः । चं० | ... | ,, | १५ |
| बौद्धमतनिरासपूर्वकं भावरूपसामान्यव्यवस्थापनम् । चं० | | ८ | १९ |
| सत्तायाः द्रव्यादित्रिकवृत्तित्वे युक्तिः । चं० | ... | ९ | ७ |
| अपरजातिपरापरजातिकथनम् । का० | ... | ,, | ११ |
| द्रव्यत्वादेः परत्वापरत्वे युक्तिः । चं० ... | ... | ,, | २३ |
| विशेषस्वरूपम् । का० मु० | ... ... | १० | ४ |
| विशेषलक्षणन्तत्र प्रमाणञ्च । चं० | ... ... | ,, | १५ |
| समवायलक्षणम् । का० | ... ... | ११ | ७ |
| समवायसिद्धिः । का० | ... ... | ,, | ८ |
| वैशिष्ट्यखंडनम् । का० | ... ... | ,, | १३ |
| गौतमानां समवाये प्रत्यक्षं प्रमाणम् । चं० | ... | १२ | ३ |
| कणादीनां ,, अनुमानं प्रमाणम् । चं० | ... | ,, | ४ |
| अभावविभागः । का० मु० | ... ... | ,, | ११ |
| अभावसामान्यविशेषाणां लक्षणम् । मु० | ... | ,, | १४ |
| अभावस्याधिकरणात्मकत्वनिरासः । मु० | ... | १३ | ४ |
| भेदस्यात्यन्ताभावेऽन्तर्भावाभावः । चं० | ... | ,, | ११ |
| संसर्गाभावत्वादीनामखण्डोपाधित्वकथनम् । चं० | ... | ,, | २६ |
| अत्यन्ताभावान्योन्याभावयोर्विशेषः । चं० | ... | १४ | ४ |
| अत्यन्ताभावविभागः चं० | ... ... | १४ | १७ |
| भेदस्याव्याप्यवृत्तित्वकथनम् । चं० ... | ... | ,, | २० |
| सप्तपदार्थसाधर्म्यम् । मु० | ... ... | १५ | ३ |
| साधर्म्यज्ञानस्योपयोगकथनम् । चं० | ... | ,, | १० |
| ज्ञेयत्वादिशब्दार्थः । चं० | ... ... | ,, | १३ |
| द्रव्यादिपंचपदार्थसाधर्म्यम् । मु० ... | ... | ,, | १८ |
| द्रव्यादित्रिकस्य गुणादेश्च साधर्म्यम् । मु० | ... | ,, | २३ |

| विषयः। | | | पृ० | पं० |
|---|---|---|---|---|
| पंचपदार्थसाधर्म्ये अनेकत्वविचारः। चं० | | ... | १६ | ११ |
| त्रिषु द्रव्यादिषु समवायेन सत्तावत्त्वे युक्तिः। चं० | | ... | ,, | २१ |
| सामान्यादिपदार्थसाधर्म्यम्। मु० | ... | ... | १७ | ६ |
| अणुपरिमाणादीनामकारणत्वसाधर्म्यम्। मु० | ... | | ,, | ९ |
| सामान्यादिषु जातिस्वीकारेऽनवस्थादिदोषकथनम्। चं० | | | १८ | ३ |
| ज्ञायमानलिङ्गकारणतावादिवैशेषिकमते पारिमांडल्येत्यादिकारिकार्थानुपपत्तिप्रदर्शनम्। चं० | | ... | ,, | १८ |
| कारणत्वलक्षणम्। का० | ... | ... | ,, | २४ |
| अतिरिक्तकारणत्वकल्पनापेक्षया तद्व्यञ्जकधर्मे कारणत्वकल्पनकथनम्। चं० | ... | ... | ,, | २७ |
| कारणलक्षणपदव्यावृत्तिः। चं० | ... | ... | १९ | ५ |
| निष्कृष्टलक्षणद्वयकथनम्। चं० | ... | ... | ,, | ११ |
| कारणविभागः। का०। | ... | ... | ,, | १६ |
| समवायिकारणलक्षणम्। मु०। | ... | ... | ,, | १८ |
| असमवायिकारणलक्षणम्। मु० | ... | ... | ,, | २० |
| तद्विभागः। मु० | ... | ... | २० | ५ |
| निमित्तकारणलक्षणम्। मु०। | ... | ... | ,, | १३ |
| कारणभेदगर्भनिमित्तकारणलक्षणाक्षेपपूर्वकं कारणताभेदगर्भतत्कथनम्। चं० | ... | ... | २१ | ३ |
| पञ्चविधान्यथासिद्धप्रदर्शनम्। मु० | ... | ... | ,, | ७ |
| तेषामुदाहरणानि। का०। | ... | ... | २३ | १३ |
| पञ्चस्वन्त्यस्यावश्यकत्वकथनम्। मु० | | ... | ,, | १९ |
| समवायि-असमवायिकारणत्वयोर्द्रव्यगुणसाधर्म्यम्। का० | | | २४ | ७ |
| कारणत्वव्यवस्थाकथनम्। चं० | ... | ... | ,, | १४ |
| नित्यद्रव्यभिन्नानां साधर्म्यम्। मु० | ... | | ,, | २४ |
| समवेतासमवेतविभागः। चं०। | ... | ... | २५ | ३ |
| नवद्रव्यसाधर्म्यम्। मु० | ... | ... | ,, | १० |
| नवद्रव्यलक्षणम्। चं० | ... | ... | ,, | १३ |
| क्षित्यप्तेजोमरुन्मनसां साधर्म्यम्। मु०। | | ... | ,, | १८ |
| परिच्छिन्नापरिच्छिन्नद्रव्यविभागे परिच्छिन्नकथनम्। चं० | | | २६ | २ |

| विषयः। | पृ० | पं० |
|---|---|---|
| कालाकाशात्मदिशां क्षित्यादिपञ्चानाञ्च साधर्म्यम्। मु० | ,, | ८ |
| अपरिच्छिन्नद्रव्यकथनम्। चं० ... ... | ,, | १८ |
| परिच्छिन्नापरिच्छिन्नयोर्भूतपदवाच्यद्रव्यकथनम्। चं० | २७ | ४ |
| द्रव्योत्पत्तिनिर्वाहकद्रव्यनिरूपणम्। चं० ... | ,, | ९ |
| पृथिव्यादिचतुर्णां साधर्म्यम्। मु० ... ... | ,, | १४ |
| आकाशशरीरिणां साधर्म्यम्। मु० ... ... | ,, | १७ |
| उक्तद्रव्यनिरूपणप्रयोजनीभूत पृथिव्यादिचतुष्टयस्य पुनः साधर्म्यम्। चं० ... ... | २८ | १४ |
| विभुविशेषकथनम्। चं० ... ... | ,, | १९ |
| अव्याप्यवृत्तित्वस्य परिष्कारः। चं० ... | २९ | ६ |
| पृथिव्यप्तेजसां, पृथिवाजलयोः, क्षितितेजसोश्च साधर्म्यम्। मु० ... ... | ,, | २४ |
| परिच्छिन्नद्रव्येषु विशेषः। चं०। ... ... | ३० | १२ |
| भूतात्मनां साधर्म्यम्। मु० ... ... | ३१ | १ |
| साधर्म्यस्य वैधर्म्यातिदेशः। का०। ... ... | ,, | २ |
| ( द्रव्यग्रन्थे लक्षणपरीक्षयोः स्थलम् ) | | |
| क्षित्यादिगुणसंख्यानम्। का० ... ... | ,, | १३ |
| पृथिवीलक्षणम्। मु० ... ... | ३२ | १६ |
| पृथिवीत्वजातिसिद्धिः मु०। ... ... | ,, | १८ |
| उद्देशविभागयोरन्ते लक्षणप्रस्तावः। चं० ... | ३३ | १६ |
| प्रासङ्गिकमव्याप्त्यादिकथनम्। चं० ... | ३४ | ५ |
| स्वरूपतटस्थभेदेन लक्षणभेदकथनम्। चं० ... | ,, | १० |
| पृथिवीरूपकथनम्। का० मु० चं० ... ... | ,, | १६ |
| पृथिवीरसकथनम्। का० मु चं०... ... | ,, | २० |
| पृथिवीस्पर्शकथनम्। का० मु० चं० ... ... | ,, | २३ |
| नित्यानित्यभेदेन पृथिवीविभागः। का०मु० ... | ३५ | ८ |
| अवयविसिद्धिः। मु०। ... ... | ,, | १५ |
| परमाणुसिद्धिः। मु०। ... ... | ३६ | ११ |
| अनित्यपृथिवीविभागे शरीरेन्द्रियविषयाणां लक्षणानि। चं० | ३७ | ११ |
| पार्थिवशरीरविभागः। का० मु० ... ... | ,, | २० |

| विषयः । | | | पृ० | पं० |
|---|---|---|---|---|
| मानवदेहस्य पार्थिवत्वस्थापनम् । मु० | | ... | ३७ | २३ |
| शरीरत्वविचारः । मु० । | ... | ... | ३८ | ५ |
| घ्राणेन्द्रियस्य पार्थिवत्वसिद्धिः । मु० ... | | ... | ३९ | १ |
| जलत्वजातिसिद्धिः । मु० | ... | ... | ४० | ४ |
| जलगुणकथनम् । मु० | ... | ... | ,, | १० |
| जले माधुर्यस्थापनम् । मु० | ... | ... | ४१ | १ |
| तैले द्रवत्वस्य दहनानुकूलत्वम् । मु० | | ... | ,, | १५ |
| जले नित्यताद्यतिदेशः । का० मु० चं० । | | ... | ४२ | १५ |
| जलीयशरीरे विशेषः । मु० | ... | ... | ,, | २० |
| रसनाया जलीयत्वम् । मु० | ... | ... | ,, | २२ |
| करकाया जलीयविषयत्वम् । मु० | ... | ... | ,, | २७ |
| तेजस्त्वजातिसिद्धिः । का०मु० । | ... | ... | ४३ | १६ |
| तेजसो गुणानां वर्णनम् । मु० । | ... | ... | ,, | २२ |
| अग्निरूपाग्रहे हेतुः । मु० । | ... | ... | ,, | २३ |
| तेजसो विभागातिदेशः । मु० । | ... | ... | ४४ | ७ |
| चक्षुषस्तेजसत्वम् । मु० | ... | ... | ,, | २३ |
| सुवर्णस्य तेजस्त्वेऽनुमानप्रमाणकथनम् । चं० | | ... | ४५ | ६ |
| नयनशब्दार्थः । चं० । | ... | ... | ,, | १७ |
| तेजोविषयविभागः : चं० | ... | ... | ,, | २३ |
| सुवर्णस्य तैजसत्वे युक्तिप्रदर्शनम् । चं० | | ... | ४६ | ३ |
| वायुलक्षणम् । का० । | ... | ... | ,, | १० |
| वायुत्वजातिसिद्धिः । मु० | ... | ... | ,, | १५ |
| वायोरनुमेयत्वकथनम् । मु० | ... | ... | ,, | १६ |
| त्वचो वायवीयेन्द्रियत्वसिद्धिः । मु० ... | | ... | ४७ | १ |
| वाय्वनुमानप्रकारः । चं० । | ... | ... | ,, | १९ |
| प्राणादिवायुविषयकथनम् । मु० चं० । | | ... | ४८ | १ |
| भाष्योक्तप्रासङ्गिकसृष्टिसंहारप्रकारवर्णनम् । चं० | | ... | ,, | १३ |
| आकाशनिरूपणम् । मु० | ... | ... | ४९ | १२ |
| आकाशत्वसामान्याभावः । मु० । | ... | ... | ४९ | १३ |
| आकाशसिद्धिः । मु० | ... | ... | ,, | १४ |

| विषयः। | पृ० | पं० |
|---|---|---|
| शब्दकारणावच्छेदकविचारः। चं०। ... ... | ५० | ८ |
| आकाशस्येन्द्रियम्। मु० ... ... | ,, | १७ |
| आकाशस्य शरीरविषययोरभावे हेतुः। चं० ... | ,, | २० |
| आकाशस्येश्वरातिरिक्तत्वम्। चं०। ... ... | ,, | २६ |
| कालनिरूपणम्। का० मु०। ... ... | ५१ | ३ |
| काले प्रमाणप्रदर्शनम्। मु० ... ... | ,, | ४ |
| कालस्य जन्यमात्रनिमित्तत्वे युक्तिः। चं० ... | ,, | १० |
| काले प्रमाणान्तरप्रदर्शनम्। मु० चं०। ... | ,, | २३ |
| कालोपाधिवर्णनम्। मु०। ... ... | ५२ | ३ |
| काललक्षणम्। चं०। ... ... | ,, | ९ |
| कालस्येश्वरातिरिक्तत्वम्। चं०। ... ... | ,, | १८ |
| दिङ्निरूपणम्। मु० चं०। ... ... | ५३ | १ |
| प्राच्यादिदिग्विशेषोपाधिवर्णनम्। चं०। ... | ,, | २१ |
| दिशोपीश्वरातिरिक्तत्वम्। चं०। ... ... | ,, | २४ |
| आत्मत्वजातिसिद्धिः। मु०। ... ... | ५४ | ३ |
| ईश्वरे प्रमाणम्। मु०। ... ... | ,, | ७ |
| आत्मन्यनुमानप्रमाणकथनम् मु० ... ... | ,, | १९ |
| शरीरात्मवादखण्डनम्। मु०। ... ... | ५५ | ४ |
| इन्द्रियाणामात्मत्वनिरासः। मु०। ... ... | ,, | १५ |
| शरीरस्यात्मत्वे चार्वाकयुक्तिः। चं०। ... | ,, | २१ |
| मनसो चैतन्याभावः मु०। ... ... | ५६ | १९ |
| क्षणिकविज्ञानस्यात्मत्वसाधकं बौद्धमतम्। मु० ... | ,, | २२ |
| तस्य खण्डनम्। मु० ... ... | ५७ | ३ |
| क्षणिकशरीरात्मवादनिरासः। मु० ... ... | ,, | १९ |
| नित्यविज्ञानात्मवादिवेदान्तिमतखण्डनम्। मु० ... | ५८ | २ |
| सांख्यमतप्रतिपादनपूर्वकं तन्निरासप्रदर्शनम्। मु०। | ५९ | ११ |
| मनसो ज्ञातृत्वे तर्कप्रदर्शनपूर्वकं तस्य ज्ञातृत्वखण्डनम्। चं० | ६० | २१ |
| प्राणस्यात्मत्वनिरसनम्। का० चं०। ... | ६१ | १ |
| गुणसम्बन्धेनात्मनः प्रत्यक्षं न स्वतः प्रकाशतेति कथनम्। चं० | ६२ | १ |
| परात्मानुमाननिरूपणम्। मु० चं०। ... ... | ,, | ११ |

| विषयः | | पृ० | पं० |
|---|---|---|---|
| आत्मनो देहादिभेदे युक्त्यन्तरम् । चं० | ... | ६३ | ४ |
| आत्मगुणप्रदर्शनम् बुद्धिप्रपञ्चवर्णनञ्च । मु० । | ... | ,, | १३ |
| आत्मनो देहादिभेदे युक्त्यन्तरप्रदर्शनम् । चं० । | ... | ,, | २२ |
| आत्मनोऽणुत्वखण्डनपूर्वकं विभुत्वव्यवस्थापनम् । चं० | | ,, | २४ |
| आत्मनो ज्ञानात्मकत्वनिरासः । चं० । | ... | ६४ | २ |
| ( द्रव्यग्रन्थे प्रत्यक्षस्थलम् ) | | | |
| प्रासंगिकबुद्धिविभागवर्णनम् । चं० । | ... | ,, | ७ |
| अनुभूतिविभागः । का० । | ... ... | ,, | १० |
| तत्र प्रत्यक्षानुमित्यादिलक्षणम् । मु० चं० । | ... | ,, | ११ |
| प्रत्यक्षकरणवर्णनम् । चं० । | ... ... | ६५ | १२ |
| प्रत्यक्षविभागः । मु० । | ... ... | ,, | २१ |
| घ्राणजादिप्रत्यक्षनिरूपणम् । का० मु० चं० । | ... | ६६ | ३ |
| चाक्षुषप्रत्यक्षकारणकथनम् । का० मु० ... | ... | ,, | २२ |
| उद्भूतत्वविचारः । चं० | ... ... | ६७ | ३ |
| प्राचीनमतेन बहिरिन्द्रियजद्रव्यप्रत्यक्षे रूपस्य कारणत्वम् । मु. | | ६८ | ४ |
| नवीनमतेन तन्निरासकथकम् । मु० | ... ... | ,, | ६ |
| वायोः स्पार्शनप्रत्यक्षाङ्गीकर्तृमीमांसकमतनिरासः । चं० | | ६९ | २ |
| सुषुप्तौ ज्ञानोत्पत्तिवारणाय त्वङ्मनःसंयोगस्य ज्ञानहेतुत्वकथनम् । मु० | ... ... | ,, | ८ |
| चाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षोत्पत्तिनिरासाय पूर्वमताक्षेपपूर्वकं चर्ममनःसंयोगस्य ज्ञानसामान्यहेतुत्वम् । | ... ... | ,, | २४ |
| सुषुप्तौ ज्ञानाभावदार्ढ्याय श्रुतिप्रदर्शनम् । चं० | ... | ७० | ७ |
| मनोग्राह्यगुणकथनम् । का० मु० चं० । | ... | ,, | १२ |
| अतीन्द्रियज्ञानवर्णनम् । मु० । | ... ... | ,, | १९ |
| मतिविशेषनिर्विकल्पकज्ञानेऽनुमानप्रमाणकथनम् । चं० । | | ७१ | ८ |
| निर्विकल्पकस्य प्रत्यक्षत्वाक्षेपसमाधाने । चं० | ... | ,, | ११ |
| षड्विधप्रत्यक्षे महत्त्वस्य हेतुत्वमिन्द्रियाणां च करणत्वम् । मु० । | ... ... | ७२ | ४ |
| इन्द्रियत्वविचारः । मु० | ... ... | ,, | ८ |

| विषयः। | पृ० | पं० |
|---|---|---|
| प्रासंगिकमुद्भूतत्वस्य वर्णनम्। मु०। ... | ,, | १२ |
| उदाहरणद्वारा षड्विधसंनिकर्षवर्णनम्। मु०चं० ... | ,, | ३ |
| अभावप्रत्यक्षे योग्यानुपलब्धेः कारणत्वम्। मु०। ... | ७५ | ८ |
| विषयस्य प्रत्यक्षहेतुत्वे युक्तिः। चं० ... ... | ७६ | ७ |
| विशेषणतायाः स्वरूपसम्बन्धविशेषत्वं तदतिरिक्तत्वं चेति मतद्वयप्रदर्शनम्। चं० ... ... | ,, | २७ |
| विशेषणताया द्वैविध्यम्। चं०। ... ... | ,, | २९ |
| तमसि घटाभावचाक्षुषवारणाय योग्यानुपलब्धिरूपसामग्री-प्रदर्शनम्। चं० ... ... | ७७ | १ |
| अनुपलब्धेः प्रमाणान्तरत्वनिरासः। चं०। ... | ,, | १२ |
| समवायप्रत्यक्षानुरोधेन विशेषणतायाः संनिकर्षता-प्रदर्शनम्। चं० ... ... | ,, | १९ |
| अलौकिकसंनिकर्षविभागः। मु० चं०। ... | ,, | २३ |
| सामान्यलक्षणाप्रत्यासत्तिकथनम्। मु०। ... | ७८ | १५ |
| ज्ञायमानसामान्यस्य संनिकर्षत्वमङ्गीकुर्वतां वैशेषिकाणां मतं तन्निरासश्च। चं०। ... ... | ७९ | ९ |
| स्मृत्याद्यात्मकसामान्यज्ञानमात्रसत्त्वे चाक्षुषाद्यनुपपत्तये युक्तिप्रदर्शनम्। मु० ... ... | ,, | २६ |
| सामान्यलक्षणास्वीकारे युक्तिप्रदर्शनम्। चं०। ... | ८० | १७ |
| वस्तुतस्त्वित्यादिना तदनङ्गीकारपक्षसमर्थ-नम्। चं०। ... ... | ,, | २४ |
| सामान्यलक्षणाज्ञानलक्षणयोर्भेदप्रदर्शनम्। मु० ... | ८१ | ७ |
| सामान्यलक्षणाज्ञानलक्षणयोः स्वीकारे युक्तिप्रदर्श-नम्। मु० चं० ... ... | ,, | १२ |
| योगजप्रत्यासत्तिविभागः। मु० ... ... | ८२ | १७ |
| योगजविभागे योगसूत्राणां प्रामाण्यम्। चं०। ... | ८३ | २ |
| युक्तयुञ्जानयोर्लक्षणम्। मु०। चं०। ... ... | ,, | ९ |


( द्रव्यग्रन्थे अनुमानस्थलम् )


| | | |
|---|---|---|
| अनुमितौ व्यापारकरणयोः प्रदर्शनम्। मु० चं०। ... | ८४ | १ |
| तत्र करणपदार्थविचारः। चं०। ... ... | ,, | १५ |

| विषयः । | पृ० | पं० |
|---|---|---|
| ज्ञायमानलिङ्गकरणतावादिप्राचीनमतखण्डनम् । मु० चं० | „ | २१ |
| परामर्शलक्षणम्, तदाकारश्च । मु० ... ... | ८५ | १८ |
| विशिष्टवैशिष्ट्यावगाहिज्ञानात्मकपरामर्शकल्पनायां युक्तिकथनम् । मु० ... ... | „ | २३ |
| परामर्शस्य निष्कृष्टलक्षणम् । चं० ... ... | ८६ | १७ |
| पूर्वपक्षव्याप्तिलक्षणम्, तद्विचारश्च । मु० चं० ... | ८७ | १ |
| पूर्वपक्षव्याप्तौ दोषदानपूर्वकं सिद्धान्तव्याप्तिलक्षणम्, तद्विचारश्च । मु० । ... ... | ८८ | २७ |
| हेतुमन्निष्ठविरहेत्यत्राभावे प्रतियोगिवैयधिकरण्यनिवेशः, तद्विचारश्च । मु०चं० ... ... | ९० | ५ |
| कालो घटवानित्यत्राव्याप्तिप्रदर्शनपूर्वकन्तद्वारणाय निष्कृष्ट-व्याप्तिलक्षणम् । मु० चं० । ... ... | ९२ | ३ |
| व्याप्तिलक्षणावसरेणावच्छेदकत्वविचारः । चं० । ... | ९५ | २० |
| पक्षतालक्षणं, तद्विचारश्च । मु० । ... ... | ९६ | १० |
| प्राचीनपक्षताखण्डनपूर्वकं नव्यपक्षतायाः सयुक्तिकत्वप्रदर्शनम् । चं० ... ... ... | ९८ | ७ |
| पक्षतास्वरूपचिफलवर्णनम् । चं० ... ... | ९९ | १० |
| दृष्टान्तेऽनुमित्यापत्तिवारकं "तत्र वृत्तित्वज्ञानादि"-स्यादिमूलमिति केचिन्मतनिरासः । चं० ... | „ | १५ |
| हेत्वाभासविभागः । का० ... ... | „ | २९ |
| नव्यमतेन हेत्वाभाससामान्यलक्षणम् । मु० ... | १०० | १ |
| सत्प्रतिपक्षादेरनित्यदोषत्वमंगीकुर्वतां प्राचीनानां हेत्वाभासलक्षणम् । मु० ... ... | „ | १३ |
| अनुमितिविरोधित्वपदार्थः । मु० ... ... | १०१ | ४ |
| साधारणादिव्यभिचारविशेषाणां लक्षणानि, तेषां दुष्टताबीजरूपं च । मु० ... .. | „ | ११ |
| विरुद्धलक्षणं, विरुद्धसत्प्रतिपक्षयोर्भेदवर्णनञ्च । मु० | „ | २० |
| सत्प्रतिपक्षलक्षणं, कोटिद्वयव्याप्यदर्शनकाले संशयाकारानुमितिरिति रत्नकोशकारमतं, तन्निरासश्च । मु० | १०२ | ४ |
| असिद्धविशेषाणां लक्षणानि, साध्याप्रसिद्ध्यादी- | | |

| विषयः । | | पृ० | पं० |
|---|---|---|---|
| नां व्याप्यत्वासिद्धावन्तर्भावश्च । मु० | ... | १०३ | ३ |
| बाधलक्षणम्, तस्य दूषकताबीजं च । मु० | ... | ,, | १७ |
| अनैकान्तादिशब्दानामर्थः । चं० ... | ... | १०४ | २० |
| साधारणादिव्यभिचाराणां विभागः । का० मु० चं० | | १०५ | ४ |
| साधारणादित्रिकोदाहरणानि । का० चं० । | ... | १०६ | १२ |
| परेत्वित्यादिनाऽन्यविधसाधारणादिदूषकतारूपवर्णनम् । चं० | ... | १०७ | ३ |
| सोदाहरणं विरुद्धलक्षणं, तद्विचारश्च । चं० | ... | ,, | १५ |
| असिद्धिविभागः सोदाहरणः । का० मु० चं० | ... | १०८ | ५ |
| 'नीलधूमादिक' इत्यत्रादिपदार्थः । चं० | ... | १०९ | १४ |
| सत्प्रतिपक्षलक्षणम् । का० मु० चं० । | ... | ,, | २० |
| तदुदाहरणम्, प्रकरणसमसंज्ञयाऽस्य गौतमसूत्रेषु परिग्रह इति विवेचनञ्च । चं० ... | .. | ११० | ४ |
| बाधलक्षणं सोदाहरणं, तस्य कालात्ययापदिष्टसंज्ञा च । चं० ... | ... | १११ | ९ |
| असंकीर्णबाधोदाहरणं, बाधानिष्कर्षश्च । चं० | ... | ११२ | १ |
| विरोधादीनां प्रतिबंधकतारूपभेदवर्णनम् । चं० | ... | ,, | ७ |
| ( द्रव्यग्रन्थे उपमानस्थलम् ) | | | |
| करणव्यापारवर्णनपूर्वकमुपमाननिरूपणम् । का० मु० चं० | | ११३ | १ |
| गवयादीत्यत्रादिपदेन वैधर्म्योपमितिसंग्रहः । चं० | ... | ११४ | ३ |
| उपमानफलस्य प्रत्यक्षाद्यसाध्यतावर्णनम् । चं० | ... | ,, | ९ |
| ( द्रव्यग्रन्थे शब्दस्थलम् ) | | | |
| करणव्यापारसहितशाब्दबोधवर्णनम् । मु० | ... | ११५ | २ |
| शक्तिस्वरूपम् । मु० ... | ... | ,, | ११ |
| शक्तिग्राहकवर्णनम् । मु० ... | ... | ,, | १७ |
| जातिशक्तिवादः । मु० ... | ... | ११८ | ८ |
| यौगिकादिशक्तपदविभागः । मु० ... | ... | ११९ | १ |
| "वाक्यजो बोधोऽनुमेय इति" सौगतवैशेषिकमतखण्डनम् । चं० ... | ... | १२० | ६ |
| जात्यादिविशिष्टव्यक्तिशक्तिस्वीकारः । चं० | ... | ,, | १८ |

| विषयः । | पृ० | पं० |
|---|---|---|
| कार्यान्वितशक्तिनिरासः। चं० । ... ... | ,, | ३१ |
| लक्षणानिरूपणम् । मु० । ... ... | १२१ | ४ |
| लक्षितलक्षणास्वीकारः । मु० ... ... | ,, | २३ |
| लाक्षणिकपदस्याननुभावकत्ववादिनां प्राचां मतम् । मु० | १२२ | ३ |
| तस्याप्यनुभावकत्वमिति नव्यमतम् । मु० । ... | ,, | ६ |
| समासे लक्षणयैव निर्वाहे शक्तिस्वीकाराप्रयोजनम् । मु० । | ,, | १२ |
| द्वन्द्वे साहित्येपि लक्षणास्वीकारः । मु० । ... | १२३ | १ |
| कर्मधारये लक्षणानंगीकारे युक्तिः । मु० । ... | ,, | १९ |
| जहदादिभेदेन लक्षणाविभागः । चं० ... | १२४ | १२ |
| तात्पर्यानुपपत्तेरेव सर्वत्र लक्षणाबीजत्वम् । चं० ... | ,, | १८ |
| शाब्दबोधहेतु–आसत्तिस्वरूपवर्णनम् । मु० ... | ,, | २६ |
| आसत्तिभ्रमाच्छाब्दभ्रम इति प्राचीनमतनिरासः । मु० । | १२५ | ४ |
| खले कपोतन्यायेनैकदा सकलपदार्थबोध इति, खण्डवाक्य-बोधानंतरं महावाक्यार्थबोध इति च मतद्वयम् । मु० । | ,, | १८ |
| स्फोटवादखण्डनम् । मु० ... ... | ,, | २० |
| योग्यताज्ञानस्य शाब्दबोधहेतुत्वे युक्तिः । मु० ... | १२६ | २१ |
| अयोग्यताज्ञानस्य प्रतिबन्धकत्वेनैव निर्वाहे योग्यता-ज्ञानस्य न हेतुतेति नव्यमतम् । मु० ... | १२७ | १ |
| आकांक्षावर्णनम् । मु० चं० । ... ... | ,, | १६ |
| तात्पर्यस्वरूपवर्णनम्, तस्य शाब्दबोधजनकत्वे युक्तिश्च । मु० चं० । ... ... | १२८ | ७ |
| प्रासंगिकं प्रलयास्तित्वसाधनम् । मु० । ... | ,, | १२ |
| प्रातिपदिकार्थादिवाक्यार्थसंसर्गबोधकवाक्यार्थबोध-प्रकारवर्णनम् । मु० चं० । ... ... | १२९ | ५ |
| अनुभवानन्तरं स्मृतिवर्णनम् । मु० ... | १३० | १ |
| स्मरणक्रमोपपादनायानुभवत्वेनैव स्मृतिकारणतेति निरूपणम् । मु० ... ... | ,, | ३ |
| मनस्यनुमानप्रमाणप्रदर्शनम् । मु० चं० । ... | ,, | १८ |
| मनसोऽणुत्वे प्रमाणकथनम् । ... ... | १३१ | ११ |
| मीमांसकाभिमतविभुत्वस्य वेदान्त्यभिमतमध्यमपरिमा- | | |

| विषयः । | पृ० | पं० |
|---|---|---|
| त्वस्य चाङ्गीकारे दोषप्रदर्शनद्वारा मनसोऽणुत्व-साधनम् । चं० ... ... | १३२ | ७ |
| ( गुणपदार्थे साधर्म्यस्थलम् ) | | |
| गुणत्वजातिसिद्धिप्रकारः । मु० । ... ... | १३३ | ३ |
| गुणसामान्यलक्षणम्, तत्परिष्कारश्च । मु० चं० । ... | ,, | ८ |
| मूर्तगुणवर्णनम्, तल्लक्षणं च । मु० । ... ... | १३४ | ४ |
| मूर्तगुणत्वस्य परिष्कारः । चं० ... ... | ,, | १० |
| अमूर्तगुणकथनम्, अमूर्तार्थश्च । चं० ... | ,, | १८ |
| उभयगुणकथनम् । का० मू० चं० । ... | ,, | २० |
| अनेकाश्रितगुणकथनम्, तदर्थश्च । चं० ... | १३५ | १ |
| एकैकवृत्तिगुणवर्णनं, एकैकवृत्तिशब्दार्थश्च । चं० ... | ,, | १० |
| विशेषगुणवर्णनम् । का० मु० चं० । ... | ,, | १७ |
| विशेषगुणशब्दार्थः । चं० ... | १३६ | ४ |
| सामान्यगुणकथनम्, तदर्थश्च । चं०... ... | ,, | १५ |
| द्वीन्द्रियग्राह्यगुणवर्णनम् । का० मु० चं० ... | ,, | १९ |
| बाह्यैकैकेन्द्रियग्राह्यगुणकथनम् । मु० चं० । ... | ,, | २५ |
| अतीन्द्रियानामकारणगुणोत्पन्नानां च गुणानां वर्णनम् । मु० चं० ... ... | १३७ | ६ |
| अकारणगुणोत्पन्नशब्दार्थः । चं० ... | ,, | १७ |
| कारणगुणोद्भवगुणकथनम् । मु० चं० । ... | ,, | १९ |
| कर्मजगुणकथनम् । का० मु० चं० । ... | १३८ | ३ |
| असमवायिगुणवर्णनम् । का० मु० चं० ... | ,, | ९ |
| निमित्तकारणगुणकथनम् । का० मु० चं० ... | ,, | २२ |
| असमवायिनिमित्तोभयगुणवर्णनम् । का० मु० चं० । | १३९ | १ |
| अव्याप्यवृत्तिगुणकथनम् । का० मु चं० ... | ,, | १८ |
| रूपत्वादिजातिसिद्धिप्रकारः । मु० चं० । ... | १४० | १ |
| रूपस्य द्रव्यादिप्रत्यक्षसहकारिताकथनम् । मु० चं० | ,, | १४ |
| चित्ररूपसिद्धिः मु० । चं० ... ... | ,, | १८ |
| नवीनमते तदभावकथनम् । मु० ... ... | १४१ | ५ |
| रूपविभागतदाश्रययोर्वर्णनम् । मु० चं० । ... | १४२ | ७ |

| विषयः । | | | पृ० | पं० |
|---|---|---|---|---|
| रसनिरूपणम् । मु० | ... | ... | ,, | १९ |
| रसलक्षणं, रसत्वजातिसिद्धिस्तद्विभागश्च । चं० | | ... | ,, | २४ |
| रसोपयोगकथनम् चं० । | ... | ... | १४३ | ५ |
| त्रिभागोपयोगनिरूपणद्वारा गन्धनिरूपणम् । चं० | | ... | ,, | ८ |
| स्पर्शोपयोगकथनपूर्वकं स्पर्शनिरूपणम् । मु० चं० | | ... | ,, | १९ |
| स्पर्शविभागः । का० मु० चं० । | ... | ... | १४४ | १ |
| रूपरसादिचतुष्टयस्य पृथिव्यामेव पाक इति वर्णनम् । मु० चं० | | | ,, | १६ |
| पृथिवीपरमाणावेव रूपादिनाशोत्पादावित्यत्र युक्ति-प्रदर्शनम् । चं० । | ... | ... | ,, | २२ |
| पृथिव्यामपि परमाणावेव पाक इति वैशेषिकमत-वर्णनम् । मु० । | ... | ... | १४५ | १ |
| ( गुणपदार्थे पाकजप्रक्रियास्थलम् ) | | | | |
| क्षणप्रक्रियावर्णने हेतुः । मु० | ... | ... | ,, | ६ |
| तत्र नवक्षणा । मु० | ... | ... | ,, | १४ |
| दशक्षणा । मु० | ... | ... | १४६ | ३ |
| एकादशक्षणा । मु० । | ... | ... | ,, | ११ |
| पंचक्षणा । मु० | ... | ... | १४७ | २ |
| षष्ठक्षणा । मु० । | ... | ... | ,, | ८ |
| सप्तक्षणा । मु० । | ... | ... | ,, | १४ |
| अष्टक्षणा । मु० । | ... | ... | ,, | २० |
| पीलुपाकवादनिष्कर्षः । चं० | | ... | १४८ | ३ |
| अवयविपाकमङ्गीकुर्वतां नैयायिकानामाशयकथनम् । मु० | | | ,, | १२ |
| वैशेषिकमतेऽरुचिप्रदर्शनपूर्वकं नैयायिकमतकथनम् । चं० । | | | ,, | १७ |
| संख्यालक्षणं, तद्विभागश्च । मु० चं० । | | ... | ,, | २६ |
| द्वित्वादिसंख्यानियामकपर्याप्तिसम्बन्धवर्ण-नम् । मु० । चं० | ... | ... | १४९ | १६ |
| द्वित्वादिनाशकनिरूपणम् । मु० । चं० | | ... | ,, | १९ |
| अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वे युक्तिः । मु० । | | ... | ,, | २१ |
| अपेक्षाबुद्धिस्वरूपम् । मु० | ... | ... | १५० | १९ |
| बहुत्वसंख्यायाः त्रित्वत्वादिभिन्नत्व-तदभिन्नत्ववा-दिमतद्वयकथनम् । मु० | | ... | ,, | २२ |


२

| विषयः। | पृ० | पं० |
|---|---|---|
| अपेक्षाबुद्धेर्द्वित्वादिहेतुत्वे युक्तिः। चं०। ... | १५१ | ७ |
| परिमाणलक्षणम्, तद्विभागश्च। मु० चं०। ... | ,, | १० |
| अनित्यपरिमाणविभागवर्णनम्। मु० चं०। ... | १५२ | १ |
| तत्र संख्याजन्यपरिमाणोदाहरणकथनम्। चं० ... | ,, | १० |
| द्व्यणुकपरिमाणे परमाणुपरिमाणस्याहेतुत्वे युक्तिः। मु०। | ,, | १२ |
| परिमाणजन्यपरिमाणस्योदाहरणम्। मु० चं० ... | ,, | २४ |
| प्रचयस्वरूपनिरूपणद्वारा तज्जन्यपरिमाणस्योदाहरणम्। का० मु० चं०। ... ... | १५३ | ३ |
| परिमाणनाशकवर्णनम्। का० मु०। ... | ,, | १० |
| परिमाणनाशेऽवयविनाशस्यावश्यकत्वप्रदर्शनम्। मु०। | ,, | १२ |
| समवायिनाशादेव परिमाणनाश इत्यत्र युक्तिः। चं०। ... | १५४ | ४ |
| पृथक्त्वनिरूपणम्। मु० चं० ... ... | ,, | ६ |
| अन्योन्याभावपृथक्त्वयोर्वैलक्षण्यवर्णनम्। मु० चं० ... | ,, | १७ |
| संयोग-स्वरूपलक्षणविभागानां वर्णनम्। मु०चं० ... | १५५ | ८ |
| अन्यतरकर्मजादिसंयोगत्रयस्योदाहरणम्। मु०चं० ... | ,, | १९ |
| कर्मजसंयोगविभागनिरूपणम्। का० मु० चं०। ... | ,, | २६ |
| संयोगजसंयोगाङ्गीकारे शंकासमाधानादि। चं०। ... | १५६ | ५ |
| विभाग-स्वरूपलक्षणतद्भेदादिवर्णनम्। का०मु०चं० ... | ,, | १८ |
| सोदाहरणविभागजविभागविभागवर्णनम्। मु०। ... | ,, | २५ |
| विभागस्य गुणान्तरत्वे युक्तिः। मु०। ... | १५७ | १४ |
| परत्वापरत्वयोर्विभागः। मु०। चं० ... | १५८ | २ |
| दैशिकयोस्तयोरुत्पत्तिहेतुकथनम्, समवायिकथनञ्च। मु० चं०। ... | ,, | ७ |
| कालिकपरत्वापरत्वयोर्निमित्तहेतुवर्णनम्, समवायिकथनञ्च। का० मु० चं०। ... | १५९ | ६ |
| उभयविधपरत्वापरत्वयोर्नाशकस्य वर्णनम्। मु०चं० ... | ,, | २६ |
| (गुणपदार्थे बुद्धिस्थलम्) | | |
| क्रमप्राप्तावशिष्टबुद्धिविभागनिरूपणम्। मु० चं० ... | १६० | १ |
| तत्र अप्रमास्वरूपतद्विभागयोः कथनम्। मु० चं० ... | ,, | ६ |
| भ्रमापरपर्यायस्य विपर्यासस्य लक्षणम् मु० चं०। ... | ,, | २२ |

| विषयः। | पृ० | पं० |
|---|---|---|
| संशयस्वरूपकथनं, निश्चयलक्षणवर्णनञ्च। का० मु० चं०। ... ... | १६१ | ४ |
| संशयलक्षण-तत्कारणयोर्निरूपणम्। का०मु०चं०। ... | ,, | १५ |
| गौतमसूत्रोक्तविप्रतिपत्तेः संशयहेतुत्वनिरासः। मु० ... | १६२ | २ |
| साधारणादीत्यत्रादिपदार्थवर्णनम्। मु०चं०। ... | ,, | १२ |
| प्रमाऽप्रमयोर्जनकस्य वर्णनम्। का० मु० चं०। ... | ,, | १६ |
| भ्रमप्रमाजनकयोर्दोषगुणयोर्वर्णनम्, प्रमानिरूपणञ्च। का० मु० चं०। ... ... | १६३ | ११ |
| प्रकारान्तरेण प्रमात्वनिर्वचनम्। का० मु० चं०। ... | १६४ | १५ |
| निर्विकल्पकस्य प्रमाभ्रमोभयातिरिक्तत्वकथनम्। का० मु० चं०। ... ... | ,, | २६ |
| प्रमात्वस्य परिष्कृतलक्षणं तत्पदकृत्यं च। चं०। ... | १६५ | ९ |
| निर्विकल्पकज्ञानस्य लक्षणद्वयम्। मु० चं०। ... | ,, | २३ |
| विशिष्टबुद्धिलक्षणं प्रकारताविशेष्यतयोः स्वरूपं च। चं०। ... ... | १६६ | ५ |
| ज्ञाननिष्ठप्रमात्वस्य स्वतोग्राह्यत्ववादिनां गुरु-भाट्ट-मुरारिमिश्राणां मतम्। मु० चं०। ... | ,, | ९ |
| तद्दूषणपुरस्कारेण ज्ञाननिष्ठप्रामाण्यस्यानुमेयत्वकथनं, तत्प्रयोगदर्शनञ्च। मु० चं० ... | ,, | १५ |
| प्रमालक्षणे गुरुमतेनाशंका, तत्समाधानञ्च। मु० ... | १६७ | ४ |
| संगतिप्रदर्शनपूर्वकम् व्याप्तिग्राहोपायकथनं, तत्र तर्कापेक्षाप्रदर्शनञ्च। मु० चं०। ... ... | १६९ | १ |
| व्यभिचारपदार्थस्वरूपम्, तस्य प्रतिबंधकता च। चं०... | १७० | ३ |
| तर्कस्वरूपं, तस्य व्यभिचारशंकाविरहसंपादकत्वेन शंकानिवर्तकत्वञ्च। चं०। ... ... | ,, | ८ |
| तर्कविभागस्तदुदाहरणानि च। चं० ... | ,, | १६ |
| तर्के दोषत्रयकथनम्। चं०। ... ... | ,, | २६ |
| उत्सर्गाचिनिगमनकल्पनादीनां तर्कान्तर्भावः। चं०। | १७१ | १२ |
| उपाधिलक्षणम्। मु० चं०। ... | ,, | २१ |

| विषयः । | पृ० | पं० |
|---|---|---|
| उपाधिनिरूपणे संगतिप्रदर्शनम् । चं० । ... | १७२ | १५ |
| व्यापकत्वाऽव्यापकत्वयोः स्वरूपम् । चं० । ... | ,, | १८ |
| उपाधिविभागः । चं० । ... ... | ,, | २२ |
| उपाधिनिष्कृष्टलक्षणम् । का० मु० चं० । ... | १७३ | ६ |
| तस्य परिष्कारः, लक्षणसमन्वयश्च । चं० । ... | ,, | १७ |
| उपाधिदूषकताबीजवर्णनम् । का० मु० चं० । ... | १७४ | १५ |
| मतान्तरे सत्प्रतिपक्षोत्थापनस्योपाधिफलम् । मु० । ... | १७५ | ५ |
| शब्दोपमानयोरनुमानान्तर्भाववादिवैशेषिकमतप्रदर्शनम्, तत्प्रयोगकथनञ्च । का० मु० चं० । ... | ,, | १६ |
| तन्मतखण्डनम् । का० मु० चं० । ... | १७६ | ८ |
| उपाधिनिरूपणान्ते उक्तमतनिरसनवर्णने संगतिप्रदर्शनम् । चं० । ... ... ... | ,, | १३ |
| केवलान्वय्यादित्रिविधानुमानवर्णनम् । का० मु० ... | १७७ | ४ |
| व्याप्तिव्यवस्थावर्णनम् । चं० । ... | ,, | १५ |
| व्यतिरेकव्याप्तिनिरूपणम् । का० मु० । ... | ,, | २१ |
| व्यतिरेकव्याप्तिज्ञानं विनापि अनुमानस्य व्यतिरेकित्वोपपादकं केचिन्मतम् । मु० । ... | १७८ | १२ |
| सोदाहरणत्रिविधानुमाननिरूपणम् । चं० । ... | ,, | २१ |
| व्यतिरेक्यनुमानवैयर्थ्याशंकासमाधानादि । चं० ... | १७९ | ७ |
| अर्थापत्तिप्रमाणस्यानुमानान्तर्भावः । का० मु० । ... | ,, | १७ |
| अनुपलंभचेष्टयोः प्रमाणान्तरतानिरासः । मु० । ... | १८० | ७ |
| अर्थापत्तिविभागवर्णनम् । चं० । ... | ,, | १४ |
| अर्थापत्तेः प्रमाणान्तरत्ववादिमीमांसकमतम्, तत्खण्डनञ्च । चं० । ... ... | ,, | २२ |
| सुखनिरूपणम् । का० मु० । ... ... | १८१ | ४ |
| ( गुणपदार्थेऽवशिष्टगुणस्थलम् ) | | |
| सुखत्वजातिसिद्धिः, सुखविभागश्च । चं० । ... | ,, | १४ |
| दुःखलक्षणम् । का० मु० । ... | ,, | १९ |
| दुःखत्वजातिसिद्धिः, लक्षणान्तरञ्च । चं० । ... | ,, | २३ |
| इच्छालक्षणं, तद्विभागश्च । का० मु० । ... | १८२ | १ |

| विषयः । | पृ० | पं० |
|---|---|---|
| इच्छात्वजातिसिद्धिः, तद्विभागश्च नित्यादि-भेदेन । चं० । ... ... ... | ,, | ९ |
| इच्छाविशेषकामादिनिरूपणम् । चं० । ... | ,, | १४ |
| चिकीर्षाहेतुनिरूपणम् । मु० । ... | ,, | २० |
| कृतिसाध्यताज्ञानस्य हेतुत्वे मानाभावशंकासमाधा-नादि । चं० । ... ... ... | १८३ | ९ |
| चिकीर्षाप्रतिबन्धकवर्णनम् । मु० । ... | ,, | १८ |
| प्रतिबन्धकाभावविधया बलवदिष्टहेतुत्वमत्यभावस्य हेतुत्वकथनम् । चं० । ... ... | ,, | २२ |
| बलवदनिष्टाजनकत्वज्ञानस्य हेतुत्ववादिनः कस्यचिन्मतम् । मु० चं० । ... | १८४ | १ |
| तत्रास्वरसप्रदर्शनम् । मु० चं० । ... | ,, | ३ |
| द्वेषनिरूपणम् । मु० चं० । ... ... | ,, | १३ |
| द्वेषविशेषक्रोधादिवर्णनम् । चं० । ... | ,, | २१ |
| प्रयत्ननिरूपणम्, तद्भेदश्च । मु० । चं० । ... | ,, | २६ |
| प्रवृत्तिजनककथनम् । मु० का० । ... | १८५ | ६ |
| तत्र गुरुमतं, तत्खण्डनञ्च मु० । ... ... | ,, | १२ |
| तत्र नव्यमतं, तन्निरासश्च । मु० ... ... | १८६ | १२ |
| इष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वस्थापनम् । मु० । ... | १८७ | १ |
| विध्यर्थ-विचारः । मु० । ... ... | ,, | १० |
| अथवेत्यादिना कल्पान्तरम् मु० । ... ... | १८९ | १ |
| उदयनाचार्यमतेन विध्यर्थनिरूपणम् । मु० । ... | ,, | १९ |
| वेदस्य पौरुषेयत्वम् । मु० । ... ... | १९० | ४ |
| निवृत्तिहेतुकथनम् । मु० । ... ... | १९१ | १३ |
| जीवनयोनियत्नकथनम्, तत्र प्रमाणञ्च । का० मु० । ... | ,, | १९ |
| गुरुत्वनिरूपणम् । का० मु० चं० । ... | १९२ | १० |
| द्रवत्वलक्षणं तद्विभागश्च । का० मु० चं० । ... | १९३ | ६ |
| लक्षणान्तरम्, तत्पदकृत्यञ्च । चं० । ... | १९४ | ६ |
| स्नेहनिरूपणम् । मु० का० चं० । ... ... | ,, | १८ |
| संस्कारभेदवर्णनं, वेगाख्यसंस्कारविभागवर्ण- | | |

| विषयः। | पृ० | पं० |
|---|---|---|
| नञ्च। का० मु० ... ... | १९५ | ८ |
| संस्कारलक्षणं, तत्पदकृत्यं च। चं०। | „ | १७ |
| वेगलक्षणं सोदाहरणं, तद्विभागवर्णनम् च। चं०... | „ | १८ |
| स्थितिस्थापकवर्णनम्। का० मु०। ... | १९६ | २ |
| स्थितिस्थापकसंज्ञाव्युत्पत्तिस्तल्लक्षणं च। चं० ... | „ | ८ |
| भावनानिरूपणं तद्धेतुकथनञ्च। मु० का०। ... | „ | १५ |
| भावनाख्यसंस्कारस्य लक्षणद्वयप्रदर्शनम्। चं०।... | „ | २५ |
| ईदृशसंस्काराङ्गीकारे प्रमाणकथनम्। का० मु० चं० | १९७ | १० |
| यागादिव्यापारतया कल्पितस्य अदृष्टविशेषस्य धर्मस्य निरूपणम्। का० मु० .... ... | १९८ | १ |
| यागध्वंसेन तस्यानन्यथासिद्धत्वकथनम्। का० ... | „ | १० |
| धर्माधर्माख्य-अदृष्टरूपपदार्थे प्रमाणकथनम्। चं० | „ | २१ |
| यागदानादिपदार्थनिरूपणम्। चं० ... | „ | २२ |
| अदृष्टरूपापूर्वकल्पने युक्त्यन्तरकथनम्। का०मु०चं०... | १९९ | १३ |
| अधर्मलक्षणम्, तत्र प्रमाणं च। का० मु० चं० ... | २०० | ४ |
| धर्माधर्मयोर्मुख्यहेतुनाशकयोरेकत्र कथनम्। ... | „ | २४ |
| तत्त्वज्ञानस्योभयनाशकत्वे युक्तिः। मु० ... | २०१ | १ |
| वासनाया धर्माधर्मौ प्रति हेतुत्वे युक्तिः। चं० ... | „ | १८ |
| आत्मतत्त्वसाक्षात्कारस्य मोक्षजनकत्वकथनम्, तत्स्वरूपप्रदर्शनादि च। चं० ... ... | २०२ | १९ |
| तत्र वेदान्तिनैयायिकमतयोरभिप्रायवर्णनम्। चं० ... | २०३ | २८ |
| शब्दनिरूपणम्, तद्विभागकथनञ्च। मु० चं० ... | २०४ | ३ |
| शब्दसन्तानोत्पादे न्यायद्वयप्रदर्शनम्। मु० चं० ... | „ | ११ |
| शब्दानित्यत्वे युक्तिः। का० मु० चं० ... | २०५ | १३ |
| प्रत्यभिज्ञानस्य सजातीयार्थकतयाऽनित्यत्वसाधकत्वमिति वर्णनम्। मु० चं० ... | „ | १९ |
| वर्णानित्यत्वप्रयोजनकथनम्। चं० ... | २०६ | १६ |
| ग्रन्थसमाप्तिः। ... | „ | २० |




व्याख्याद्वयोपेतकारिकावल्याः

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृ० | पं० |
|---|---|---|---|
| इवेतियुक्तम् | इवोपयुक्तः । | ३ | २७ |
| नियत | नियतः | २३ | ७ |
| द्रव्यत्वगुण | द्रव्यत्वंगुण | २५ | ११ |
| ते परिच्छिन्ना | तेऽपरिच्छिन्ना | २६ | १८ |
| तादृशागुण | तादृशगुण | २८ | १० |
| गुरुत्वे | गुरुत्वं | ३१ | २१ |
| जलवत्स्य | जलत्वस्य | ४२ | २७ |
| कः स्त्विवतिअलौकिक | कस्त्विवतिअलौकिकः | ७८ | ११ |
| चिंताया | चिन्तया | ८३ | १७ |
| न्यवृत्तित्वं | न्यावृत्तित्वं | ८७ | २१ |
| दंपयो | दम्पत्यो- | १२३ | १७ |
| त्पदार्थान | त्पदार्थानां | १२५ | ११ |
| श्लोकापदा | श्लोकपदा | १२६ | १७ |
| पदार्थेस्य | पदार्थस्य | १२७ | ७ |
| विंषययस्य | विंषयस्य | १५० | २६ |
| वैशेषिकं | वैषयिकं | १८१ | १५ |
| पायनत्वाधी | पायत्वधी | १९१ | १३ |



॥ श्रीः ॥

# कारिकावलीमूलपाठः ।

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥
द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥ २ ॥
क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।
द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥
उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥
भ्रमणं रेचनं स्पन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥
सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥
परभिन्ना तु या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥
व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च ।
अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥
घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः ॥ ११ ॥
अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥ १२ ॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।
सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥
द्रव्यादयः पञ्च भावा अनेके समवायिनः ।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥
सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥
अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥

समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥
यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥ १८ ॥
येन सह पूर्वभावः कारणमादाय वा यस्य ।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९ ॥
जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥
एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥
तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥
समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ २३ ॥
अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।
क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥ २४ ॥
क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥
कालखात्मदिशां सर्वगतत्वं परमं महत् ।
क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥ २६ ॥
द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥
रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥
आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।
यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥
वायोर्नवैकादश तेजसो गुणाः जलक्षितिप्राणभृतां चतुर्दश ॥
दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च ॥*
स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ।
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३२ ॥
धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।

संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥
तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।
षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥
स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ।
नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥
अनित्या तु तदन्या स्यात्सैवावयवयोगिनी ।
सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥
योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम् ।
विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥
वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।
स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥
नित्यतादि प्रथमवत्किन्तु देहमयोनिजम् ।
इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥
उष्णस्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।
नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥ ४१ ॥
इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः ।
अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥ ४२ ॥
तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।
पूर्ववन्नित्यताद्युक्तं, देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥
प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ।
आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥
इन्द्रियं च भवेच्छ्रोत्रमेकः सन्नप्युपाधितः ।
जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥
परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।
दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥
उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।
आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥
शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥
मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।
प्राणोऽप्यात्मा न भवति ज्ञानाभावात्सुषुप्तिषु ॥
चैतन्ये तस्य तत्रैव सपुष्यं व्यापृतिर्भवेत् ॥ १ ॥
धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥

प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।
अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥
विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥
प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।
इन्द्रियं करणं तत्र प्रत्यक्षे षड्विधेऽपि च ॥
घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥
घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥
उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।
विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥
क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ।
गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥
उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥
द्रव्याध्यक्षे, त्वचो योगो मनसा ज्ञानकारणम् ।
मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥
ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।
महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥
विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषु समवेतानां तथा तत्समवायतः ।
तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥
विशेषणतया तद्वदभावानां ग्रहो भवेत ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥
अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥
आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ।
तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥
विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।
योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥
युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।
व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥

अनुमायां, ज्ञायमानं लिङ्गं तु करणं नहि ।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥
व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।
व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥ ६८ ॥
अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥
सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
सपक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥
अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥ ७१ ॥
आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।
तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत् ॥ ७२ ॥
यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।
यस्तूभयस्माद्व्यावृत्तः स त्वासाधारणो मतः ॥ ७३ ॥
तथैवानुपसंहारी केवलान्वयिपक्षकः ।
पर्वतो वह्निमान् सत्त्वादिति तत्रादिमो भवेत् ॥
पृथ्वी नित्या गन्धवत्त्वादिति स्यादपरस्तथा ॥
सर्वं तुच्छं प्रमेयत्वादिति तत्रान्तिमो भवेत् ॥
यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४ ॥
गोत्वादि साध्ये हेतुर्हि यत्राश्वत्वादिको भवेत् ॥
आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ ।
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥
पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।
ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।
विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥
श्रावणत्वादितो नित्योऽनित्यो जन्यत्वहेतुभिः ॥
साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥
ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥ ७९ ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥ ८० ॥
पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥

लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः ।
आसत्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ॥ ८२ ॥
कारणं संनिधानं तु पदस्यासत्तिरुच्यते ।
पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥ ८३ ॥
यत्पदेन विना यस्यानन्वयभावकता भवेत् ।
आकाङ्क्षा, वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥
साक्षात्कारे सुखादीनां करणं मन उच्यते ।
अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥ ८५ ॥
अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ।
रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥
द्रवत्वं स्नेहवेगाश्च मता मूर्तगुणा अमी ।
धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥ ८७ ॥
एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः ।
संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥ ८८ ॥
संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा ।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥
अतः शेषगुणाः सर्वे मता एकैकवृत्तयः ।
बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥ ९० ॥
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः ।
संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥ ९१ ॥
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ।
संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥
एते तु द्वीन्द्रियग्राह्या, अथ स्पर्शान्तशब्दकाः ।
बाह्यैकैकेन्द्रियग्राह्या, गुरुत्वादृष्टभावनाः ॥ ९३ ॥
अतीन्द्रिया, विभूनां तु ये स्युर्वैशेषिका गुणाः ।
अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥
अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् ।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ।
संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥
स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ।
भवेदसमवायित्वम्, अथ वैशेषिके गुणे ॥ ९७ ॥
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः ।
वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥
द्विधैव कारणत्वं स्यात्, अथ प्रादेशिको भवेत् ।

वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥
चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।
चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥
जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् ।
रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥
सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।
घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥
सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः ।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥
अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः ।
काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥
एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित् ।
तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥ १०५ ॥
नैयायिकानां तु नये द्व्यणुकादावपीष्यते ।
गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥ १०६ ॥
नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।
द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥
अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः ।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ १०८ ॥
अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते ।
परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥
अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥
संख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं, द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥ १११ ॥
परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥
परिमाणं तूलकादौ, नाशस्त्वाश्रयनाशतः ।
संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ ११३ ॥
अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते ।
अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥ ११४ ॥
अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥
तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः ।
आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥ ११६ ॥

द्वेषयोः सन्निपातो यः स द्वितीय उदाहृतः।
कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥ ११७ ॥
तृतीयः स्यात्कर्मजोऽपि द्विधैव परिकीर्तितः।
अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥
शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत्।
एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥ ११९ ॥
विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत्।
हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥
परत्वं चापरत्वं च द्विविधं परिकीर्तितम्।
दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ॥ १२१ ॥
परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत्।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ १२२ ॥
तयोरसमवायी तु दिक्संयोगस्तदाश्रये।
दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥
परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः।
अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥ १२४ ॥
अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः।
बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥ १२५ ॥
अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥ १२६ ॥
तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता।
तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥ १२७ ॥
आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः।
भवेन्निश्चयरूपा या, संशयोऽथ प्रदर्श्यते ॥ १२८ ॥
किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२९ ॥
स संशयो मतिर्या स्यादेकत्राभावभावयोः।
साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥
दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत्।
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ १३१ ॥
प्रत्यक्षे तु विशेष्येण विशेषणवता समम्।
संनिकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥ १३२ ॥
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत्।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा।

गुणः स्यात्, भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥
अथवा तत्प्रकारं यज्ज्ञानं तद्विशेष्यकम्।
तत्प्रमा, न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥ १३५ ॥
प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत्।
प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥
व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा।
हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥
साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥
सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥
व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम्।
शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥
अनुमानगतार्थत्वादिति वैशेषिकं मतम्।
तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥ १४१ ॥
त्रैविध्यमनुमानस्य केवलान्वयिभेदतः।
द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥
अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते।
साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥
अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥
सुखं तु जगतामेव काम्यं धर्मेण जायते।
अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥
निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते।
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥
चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत्।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥
बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका।
तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥
द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम्।
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम्।
चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्।
निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टोपायत्वधीर्यदि ॥ १५१ ॥

यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् ।
शरीरे प्राणसंचारे कारणं परिकीर्तितः ॥ १५२ ॥
अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥
तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि ।
सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥ १५४ ॥
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।
परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥ १५५ ॥
नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ।
द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहे तु तत् ॥ १५६ ॥
स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ ।
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ १५७ ॥
संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।
मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥
स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥ १५९ ॥
भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।
धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥ १६१ ॥
गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः ।
कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥
अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ।
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥ १६३ ॥
इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।
शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।
कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥
उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥
इति श्रीविश्वनाथपञ्चाननभट्टाचार्यकृता कारिकावली समाप्ता ॥

ॐ नमः परमात्मने ।

श्रीविश्वनाथन्यायपञ्चाननविरचिता ।

# कारिकावली ।

## तत्कृतसिद्धान्तमुक्तावली-
## श्रीनारायणतीर्थकृतन्यायचन्द्रिका-
## व्याख्याद्वयसहिता ।

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥

मुक्तावली ।

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥
निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरंतनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥
सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताऽभावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम्(१) ॥३॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—नूतनेत्यादि । ननु मङ्गलं न विघ्नध्वंसं प्रति (२)न वा समाप्तिं प्रति कारणम्—वि-

---

(१) अत्र प्रेक्षावत्प्रवृत्त्यङ्गमनुबन्धचतुष्टयं प्रदर्शितं ग्रन्थकर्त्रा । तत्र द्रव्यादयो विषयाः पदार्थतत्त्वावधारणं प्रयोजनं प्रतिपाद्यप्रतिपादकभावः सम्बन्धः पदार्थतत्त्वावधारणकामोऽधिकारीति ।

(२) सर्वमतसंमतसमाप्तिविघ्नध्वंसान्यतररूपफलविशेषाभावस्य मंगले फलसामान्याभावसाधकस्य प्रदर्शनार्थं न वा समाप्तिमित्याद्युक्तम् तेन नवेत्यस्य नासंगतिरिति बोध्यम् ।

नापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेत् । न । अविगीतशिष्टाचाराविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात् उपस्थितत्वाच्च समाप्तिरेव तत्फलं कल्प्यते । इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते । यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा(१) बोध्यम्, प्रचुरस्यास्यैव बलवत्तरविघ्ननिराकरणे कारणत्वम्, विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः(२) प्राञ्चः । नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलम्, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात् । नच स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम् । इष्टापत्तेः, विघ्नशङ्कया तदाचरणात् । (३)तथैव शिष्टाचारात् । नच तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम् । सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्(४) । अत एव पापभ्रमेण कृतस्य प्रायश्चितस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम् । मङ्गलं तु विघ्नध्वंसविशेषे कारणं विघ्नध्वंसविशेषे च विनायकस्तवपाठादि । (५)क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं—प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात् । इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, (६)स्वतःसिद्धविघ्नात्यन्ताभावो वास्तीति न व्यभिचार इत्याहुः । संसारेति । संसार एव महीरुहो वृक्षस्त-

---

(१) अत्र विघ्नसमसंख्याकमंगलत्वेन हेतुत्वेऽधिकसंख्याकमंगलान्न्यूनसंख्याकविघ्ननाशो न स्यादतः प्राचुर्यं वेत्यत्र वाकारोऽनास्थायां बोध्यः ।

(२) आहुरित्यनेन नास्तिकग्रन्थसमाप्तौ व्यभिचारास्वरससूचनम् । जन्मान्तरीयमंगलकल्पने तु जन्मान्तरीयसमाप्त्युद्देशेन जन्मान्तरीयमंगलकरणापत्तेरिति ।

(३) ननु विघ्नसंशये मंगलाचरणमेवासिद्धमत आह तथैवेति ।

(४) ध्वंसं प्रति प्रतियोगिनः कारणत्वनियमादित्यर्थः ।

(५) नन्वेवं समाप्तिकामनया मंगले प्रवृत्तिर्न स्यादतः समाप्तिसाधनविघ्नध्वंससाधनत्वात् मङ्गले प्रवृत्तिर्वाच्या सा च स्वतःसिद्धविघ्नविरहस्थले व्यभिचारेण न संभवतीत्याशंक्याह क्वचिच्चेति ।

(६) प्राच्यमतोक्तदूषणनिरासाय स्वतःसिद्धेत्यादि कल्पान्तरम् ।

स्य बीजाय निमित्तकारणायेत्यर्थः । एतेन ईश्वरे प्रमाणमपि दर्शितं भवति । तथाहि—यथा घटादि कार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपीति । नच तत्कर्तृत्वमस्मदादीनां संभवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः । न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्, अप्रयोजकत्वात् । मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एवाऽनुकूलस्तर्कः । इत्थञ्च 'द्यावाभूमी जनयन्देव एकः,' 'विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादय आगमा अप्यनुसन्धेयाः ॥ १ ॥

चन्द्रिका ।

नारायणपदममलं नत्वा नारायणाख्ययतिः ।
न्यायनयकारिकाणां सुव्याख्यानं तनोति सत्प्रीत्यै ॥ १ ॥

चिकीर्षितग्रन्थस्य निर्विघ्नपरिसमाप्तये कृतं स्तुतिनमस्काररूपं मङ्गलं शिष्यान् शिक्षयितुं ग्रन्थादौ निबध्नाति नूतनेति । अत्र चतुर्थ्यन्तशब्दः सर्वोपि स्तुतिरूपः तस्य गुणवत्तया ज्ञापकत्वात् । नमःशब्देन कायिकवाचिकभेदात् त्रिविधो नमस्कारो निबद्धः स च स्वापेक्षयोत्कर्षबोधानुकूलो व्यापारः करशिरःसंयोगादिरूपः । अत्र तस्मै इतिपदं श्रुतिस्मृतिप्रसिद्धत्यर्थकम् । कृष्णपदं योगरूढं रूढमेव वा । तथा च 'सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावनसुरभूरुहतलासीन'मित्याद्यागमप्रसिद्धाय नन्दनन्दनाय भक्तानुग्राहकायेत्यर्थः । कीदृशाय—नूतनजलधररुचये । नूतनो यो जलधरो मेघस्तस्य रुचिरिव रुचिर्यस्य तस्मै । अत्र नूतनेति दृष्टान्तेन तद्भजनात् शीघ्रमेवेष्टसिद्धिर्भवतीति लभ्यते । पुनः कीदृशाय—गोपवधूटीदुकूलचौराय । गोपानां वधूट्यो युवस्त्रियस्तासां दुकूलं वस्त्रं तस्य चौराय । अनेनाविदुषोऽपि श्रेयःप्राप्तिर्भवतीति लभ्यते । तदुक्तं—

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः
कृष्णे क्व चैष परमात्मनि रूढभावः ।
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षात्
श्रेयस्तनोत्यगदराज इवेति युक्तम् ॥

इति । पुनः कीदृशाय—संसारमहीरुहस्य बीजाय । संसार एव यो

महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणाय। अनेनेश्वरेऽनुमानमपि प्रमाणमिति सूचितम्। कार्यस्य सकर्तृकत्वनियमात्। तद्यथा—यद्यत्कार्यं तत् तत्सकर्तृकमिति घटादिदृष्टव्याप्तिकेन कार्यत्वहेतुना प्रयोज्यायां सर्गाद्यकालीनद्व्यणुकादौ सकर्तृकत्वानुमितौ भगवद्विषयकत्वमक्षतमेव तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपतत्कर्तृत्वस्यासर्वज्ञे जीवेऽसम्भवात्। न हि द्व्यणुकोपादानपरमाणुविषयं प्रत्यक्षं जीवानां दृष्टं श्रुतं वा। तस्मात्परमेश्वर एव सर्वज्ञः संसारस्य कर्त्ता, "यतः सर्वाणि भूतानि भवन्त्यादियुगागमे" इत्याद्यागमाच्चेति भावः॥ १॥

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्त्तिताः॥ २॥

पदार्थान्विभजते—द्रव्यं गुण इति। अत्र सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं तेन (भावत्वेन) पृथगुपन्यासो न कृतः। एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकानामप्यविरुद्धाः। प्रतिपादितं चैवमेव भाष्ये। अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वमाशङ्कितम्—ननु कथमेत एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्। तथाहि—मण्यादिसमवहितेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते। तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिः नाश्यते उत्तेजकेन मण्याद्यपसारणेन च जन्यत इति कल्प्यते। एवं सादृश्यमप्यतिरिक्तः पदार्थः। तद्धि न षट्सु भावेष्वन्तर्भवति सामान्येऽपि(१) सत्त्वात्। यथा गोत्वं नित्यं तथाश्वत्वमपीति सादृश्यप्रतीतेः। नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेत्। न। मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते। अनेनैव सामञ्जस्ये अनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात्। न चोत्तेजके

(१) सामान्येपीति। सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादित्यर्थः। तेन सामान्यत्वे न व्यभिचारः।

सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम् । उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात् । सादृश्यमपि न पदार्थान्तरं किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । यथा चन्द्राभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ २ ॥

साक्षात्परम्परया वा पदार्थज्ञानस्य परमपुमर्थहेतुत्वादुद्देशतो लक्षणतश्च पदार्थानाह द्रव्यं गुणा इति । उद्देशोऽयम् । अत्र पदार्थाः सप्त । के ते? द्रव्यादय इत्यर्थः । पदार्थत्वमखण्डोपाधिः पदस्यार्थाः पदार्थाः इति योगोद्धारेण पदाभिधेयत्वं च, तच्च पदशक्यत्वम् । इदमेव सामान्यलक्षणमखण्डधर्मेणोपस्थितानां तेषाम्, तेन लक्षणमकृत्वा कथं विभाग इति न न्यूनतापि । अत्र विभागादेव सप्तत्वसंख्यालाभसम्भवेऽपि सप्तेति विधानं न्यूनाधिकसंख्याव्यवच्छेदार्थं बोध्यम् । ननु सिद्ध्यसिद्धिव्याघातः अतिरिक्तस्य सिद्धौ निषेधायोगात् असिद्धौ प्रतियोगिप्रमितिं विना निषेधानुपपत्तेरिति चेन्न पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्यवच्छेदार्थत्वात् । एवमग्रेऽपि द्रष्टव्यम् । सप्तान्यतमत्वञ्च द्रव्यादिभेदसप्तकशून्यत्वं न तु द्रव्यादिसप्तकभिन्नत्वं सप्तभिन्नस्याप्रसिद्धेः ॥ २ ॥

क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।

द्रव्याणि

द्रव्याणि विभजते—क्षित्यबिति । क्षितिः पृथिवी, आपो जलानि, तेजो वह्निः, मरुद् वायुः, व्योम आकाशः, कालः समयः, दिक् आशा, देही आत्मा, मनः एतानि नव द्रव्याणीत्यर्थः । ननु द्रव्यत्वजातौ किं मानम्, नहि तत्र प्रत्यक्षं प्रमाणं—घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति । चेत् न । कार्यसमवायिकारणतावच्छेदकतया संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया तत्सिद्धेरिति(१) । ननु दशमं द्रव्यं तमः कुतो नोक्तं ? तद्धि प्रत्यक्षे-

(१) तथा च समवायेन कार्यं प्रति तादात्म्येन द्रव्यं कारणमिति नियमात् समवायसम्बन्धावच्छिन्नकार्यमात्रनिष्ठकार्यत्वावच्छिन्नकार्यतानिरूपितादात्म्यसम्बन्धावच्छिन्नद्रव्यमात्रनिष्ठकारणताया.

ण गृह्यते, तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्यत्वं, तच्च गन्धशून्यत्वात् न पृथिवी, नीलरूपवत्त्वाच्च न जलादिकं, (१)तत्प्रत्यक्षे चालोकानिरपेक्षं चक्षुः कारणमिति चेत् । न । आवश्यकतेजोऽभावेनोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् । रूपवत्ताप्रतीतिस्तु भ्रमरूपा । कर्मवत्ताप्रतीतिरप्यालोकापसरणौपाधिकी भ्रान्तिरेव । तमसोऽतिरिक्तद्रव्यत्वेऽनन्तावयवादिकल्पनागौरवं च स्यात् । सुवर्णस्य यथा तेजस्यन्तर्भावस्तथाऽग्रे वक्ष्यते ॥

द्रव्यं विभजते क्षितीत्यादि । द्रव्याणि नव । कानि तानि ? क्षित्यादीनीत्यर्थः । अन्धकारस्तु यद्यपि नीलं तम इति रूपवत्तया प्रतीयते तथापि न द्रव्यम् आवश्यकतेजोऽभावेन तमःप्रतीतेर्गतार्थत्वात् रूपवत्ताप्रतीतिर्भ्रम एवेति भावः । तत्र क्षितिः पृथिवी आपो जलानि तेजो वन्ह्यादिः मरुत् वायुः व्योम आकाशः कालः इदानीमित्यादिव्यवहारहेतुः दिक् इहेत्यादिव्यवहारहेतुः देही जीवात्मपरमात्मभेदेन द्विविधः आत्मवत् परमात्मनोऽपि रामकृष्णादिशरीरसत्त्वात् मन आन्तरमिन्द्रियम् । एतेषां नवानां द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा सामान्यलक्षणम् । तत्र द्रव्यत्वजातिसिद्धिरग्रे वक्ष्यते ॥

अथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततःपरम् ।
संयोगश्च विभागश्च परत्वञ्चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

गुणान्विभजते—अथ गुणा इति । एते गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतः 'च'शब्देन च दर्शिताः । तत्र गुणत्वादिकजातिसिद्धि-

---

नियामकं घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतानियामककपालत्ववद्द्वयं स्वीकार्यं तथान्यूनानतिप्रसक्तं द्रव्यत्वमेवेति भावः । अनुमानप्रयोगस्तु द्रव्यनिष्ठकारणता किंचिद्धर्मविशिष्टा कारणतात्वात्कपालनिष्ठकारणतावदित्यादिः ॥ कार्यतावच्छेदकस्य कार्यत्वस्य प्रागभावादिघटितत्वाद्गौरवमतः संयोगस्येति । नित्यसंयोगाङ्गीकर्तृनये संयोगत्वावच्छिन्नकार्यताया असंभवोऽतस्तृतीयकल्पो विभागस्येति बोध्यः ।

(१) पृथिव्यादिकरतद्रव्यानन्तर्भावे हेत्वन्तरभूतं वैलक्षण्यमाह तत्प्रत्यक्षे चेति ।

ग्रे वक्ष्यते ॥ ३ ॥ ४ ॥ ५ ॥

गुणान्विभजते अथ गुणा इति । गुणाश्चतुर्विंशतिरेव । के ते ? रूपरसादय इत्यर्थः । अदृष्टं धर्माधर्मौ अतो न चतुर्विंशतित्वानुपपत्तिः । चतुर्विंशतित्वमत्रापेक्षाबुद्धिविशेषविषयत्वं न संख्या बाधात् । यद्यपि रूपादिवल्लघुत्वमृदुत्वकाठिनत्वादिकमपि प्रत्यक्षसिद्धं तथापि तन्न गुणान्तरं लघुत्वस्य गुरुत्वाभावेऽन्तर्भावात् मृदुत्वकठिनत्वयोस्त्ववयवसंयोगविशेषेऽन्तर्भावात् । एतेषां सर्वेषां गुणत्वजातिमत्त्वं द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं सामान्यलक्षणम् । गुणत्वजातिसिद्धिरप्यग्रे वक्ष्यते ॥ ३ ॥ ४ ॥ ५ ॥

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनन्तथा ।
प्रसारणञ्च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥

कर्माणि विभजते—उत्क्षेपणमिति । कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । एवमुत्क्षेपणत्वादिकमपि ॥ ६ ॥

कर्म विभजते उत्क्षेपणमिति । कर्माणि पञ्च । कानि तानि ? उत्क्षेपणादीनीत्यर्थः । तत्र उत्क्षेपणम् उत्क्षिपामीतीच्छयोर्ध्वपातनम् । अपक्षेपणम् अपक्षिपामीतीच्छयाऽधः पातनम् । आकुञ्चनम् अङ्गुल्यादीनां सङ्कोचसम्पादनम् । प्रसारणं सङ्कुचितस्य विस्तृतिसम्पादनम् । गमनमेतच्चतुष्टयभिन्नं देशान्तरसंचारादिरूपम् । एतेषां पञ्चानां कर्मत्वजातिमत्त्वं संयोगभिन्नत्वे सति संयोगासमवायिकारणत्वं वा सामान्यलक्षणम् । अत्रापि पञ्चत्वं न संख्या बाधात् किन्तु प्राग्वद्बोध्यम् ॥ ६ ॥

भ्रमणं रेचनं स्पन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

ननु भ्रमणादिकमपि पृथक्कर्म पञ्चकर्माधिकतया कुतो नोक्तमत आह—भ्रमणमित्यादि ॥ ७ ॥

ननु भ्रमणादीनामपि सत्त्वात्कथं पञ्चैव कर्माणि तत्राह भ्रमणमिति । चक्रादौ तिर्यक्संयोगादिजनकानां भ्रमणादीनामुक्तचतुष्टयभिन्नत्वाद्गमन एवान्तर्भाव इति भावः ॥ ७ ॥

सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

सामान्यं निरूपयति—सामान्यमिति । तल्लक्षणं तु नित्यत्वे सति अनेकसमवेतत्वम् । अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं–नित्यत्वे सतीति । नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति । नित्यत्वे सति अनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् (१) एकमात्रव्यक्तिवृत्तिस्तु न जातिः । तथा चोक्तम्—

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥

द्रव्यादीति । परत्वमधिकदेशवृत्तित्वम्, अपरत्वमल्पदेशवृत्तित्वं । सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वं, तदपेक्षया चान्यासां जातीनामपरत्वम् ॥ ८ ॥

सामान्यं विभजते सामान्यमिति । समानानामेकाकारेण प्रतीयमानानां भावो धर्मः सामान्यमित्यर्थः । तथा च सामान्यपदेनैव धर्मिणां बहुत्वे धर्मस्य चैकत्वे विवक्षितेऽनुगतमतिविषयत्वे च विवक्षिते नित्यमेकमनेकसमवेतमिति तल्लक्षणम्, तथा द्रव्यं द्रव्यं घटोयं घटोयमित्याद्यनुगतमतिरनुगतधर्मसाध्या अबाधिताऽनुगतमतित्वात् दामकुसुमबुद्धिवदित्यनुमानं च लब्धम् । एतेन सामान्यं भावरूपं नास्त्येव किन्त्वघटापोहरूपं तुच्छमभावस्य सद्रूपत्वानङ्गीकारादिति बौद्धमतं निरस्तम्, किञ्च घटानामपि परस्परं भिन्नत्वमेवास्ति न तु तद्भेदवत्त्वम् । अथ घटत्वावच्छिन्नभेदवत्त्वं घटभिन्नत्वं तच्च न घटेष्विति चेत् सिद्धन्तर्हि घटत्वेनेति न किञ्चिदेतत् । तत्र जातिं विभजते द्विविधमिति । अनेन त्रिविधमिति मतं केषाञ्चिन्न सम्यगिति

(१) ननु तथापि नित्यसंयोगेऽतिव्याप्तिरिति चेन्न तस्या निरस्तप्रायत्वात् । कथमिति चेत् तत्संयोगाङ्गीकर्त्रा संयोगत्वस्य नित्यवृत्तितया कार्यतानवच्छेदकत्वात् कार्यतावच्छेदककोटौ जन्यत्वनिवेशे गौरवात्तपरित्याज्यम् तुल्ययुक्त्या विभागोपि नित्योङ्गीकार्य इति ।

ष्वनितम् । परं व्यापकम् अपरं व्याप्यम्, तथा च परापरमतिरिक्तं नास्त्येव वक्ष्यमाणयुक्तेरिति भावः । तत्र परमाह द्रव्यादीति । सत्ता सतो भावः सत्ताख्या जातिः परतयोच्यते परं सामान्यमिति कथ्यते । यतो द्रव्यादित्रिकवृत्तिः-द्रव्यं सत् गुणः सन् कर्म सदित्यनुभवात् द्रव्यगुणकर्मवृत्तिस्तथाचाधिकदेशवृत्तित्वमेव परत्वम् । तच्च नवद्रव्यादिमात्रनिष्ठद्रव्यत्वाद्यपेक्षया सत्ताया एवास्तीति सा परतयोच्यत इत्यर्थः । ननु सत्तायाः द्रव्यादित्रिकमात्रवृत्तित्वाभ्युपगमे कथं जातिः सतीत्यादिप्रतीतिरिति चेत् एकार्थसमवायादित्यवेहि, असति बाधक एव समवायेन तदभ्युपगमात् । जात्यादौ च जात्यादेर्वक्ष्यमाणबाधकेन निरासादित्यन्यत्र विस्तरः ॥ ८ ॥

परभिन्ना तु या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥
व्यापकत्वात्परापि स्यात् व्याप्यत्वादपरापि च ।

पृथिवीत्वाद्यपेक्षया द्रव्यत्वस्याधिकदेशवृत्तित्वाद्व्यापकत्वात्परत्वं, सत्तापेक्षयाल्पदेशवृत्तित्वाद्व्याप्यत्वात् द्रव्यत्वस्यापरत्वं, तथाच धर्मद्वयसमावेशादुभयमविरुद्धम् ॥ ९ ॥

अपरामाह परभिन्ना त्विति । सत्ताभिन्ना घटत्वादिका या जातिः सैवापरतयोच्यते अपरं सामान्यमिति कथ्यते । न्यूनदेशवृत्तित्वमपरत्वं तच्च बहुविषयवृत्तिसत्ताद्यपेक्षया पृथिव्येकदेशवृत्तिघटत्वादीनामिति तदपरं सामान्यं कथ्यते इति भावः । परत्वापरत्वयोः समावेशेन परापरं सामान्यमाह द्रव्यत्वादिकेति । परापरतया पृथिवीत्वापेक्षया परा सत्तापेक्षयाऽपरा ॥ ९ ॥

तत्र हेतुमाह—व्यापकत्वात् पृथिवीत्वापेक्षयाऽधिकदेशवृत्तित्वात् यतः पृथिवीत्वं पृथिव्यामेव द्रव्यत्वं तु पृथिवीजलतेजःप्रभृतिषु नवद्रव्येषु, व्याप्यत्वात् सत्तापेक्षया न्यूनदेशवृत्तित्वात् यतः सत्ता द्रव्ये गुणे कर्मणि च द्रव्यत्वं तु द्रव्य एव । एवं पृथिवीत्वमपि घटत्वाद्यपेक्षया परं द्रव्यत्वापेक्षयाऽपरम् द्विविधस्यापि सामान्यस्य नित्यत्वे सत्यनेकसमवेतत्वं लक्षणं प्रागेवोक्तम् । तत्र संयोगेऽतिव्याप्तिवारणाय सत्यन्तम् । परमाणुपरिमाणवाद्यतिव्याप्तिवारणायानेके-

ति। अभावेऽतिव्याप्तिवारणार्थं वृत्तित्वसामान्यं विहाय समवेतत्वमिति। यत्र च तद्बाधस्तत्र तथानुगतो धर्मोऽखण्डोपाधिरेव यथोदाहृतं पदार्थत्वं यथा वा सम्बन्धत्वादिकमित्यास्तां विस्तरः ॥

अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितः ॥ १० ॥

विशेषं निरूपयति---अन्त्य इति। अन्ते अवसाने वर्तते इत्यन्त्यः। यदपेक्षया विशेषो नास्तीत्यर्थः। घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः, परमाणूनां परस्परभेदको विशेष एव, स तु स्वत एव व्यावृत्तः तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥ १० ॥

विशेषं लक्षयति अन्त्य इति। अन्ते ऽवसाने स्वस्वाश्रयसजातीयव्यावर्त्तकान्तरसमाप्तौ भवति व्यावर्त्तकतया सिद्ध्यतीत्यन्त्यो यदपेक्षया विशेषो नास्ति,प्रतिव्यक्तिनियतः स्वतो व्यावृत्त इति यावत्। सर्वसाधारणैकत्वे सामान्यरूपतापत्त्या स्वतोव्यावृत्तत्वाभावे च गुणेष्वन्तर्भावप्रसक्त्या स्वासिद्धिप्रसङ्गो व्यावृत्त्यसिद्धिप्रसङ्गश्च स्यादिति भावः। प्रतिव्यक्तिनियत इत्यनेन सामान्यादिभ्यो भेदः। स्वतोव्यावृत्त इत्यनेन सामान्यवद्भ्यो भेदो लब्धः। तथा चान्त्यत्वमेवास्य लक्षणम्।प्रमाणसूचनाय नित्यद्रव्यवृत्तिरिति। नित्यद्रव्येषु परमाणुप्रभृतिषु वृत्तिर्वर्तनं यस्य तादृशः घटादीनां द्व्यणुकपर्यन्तानामवयविनां परस्परमवयवभेदात् भेदः सिद्ध्यति परमाणूनां तु न तथा निरवयवत्वात्। नापि प्रत्येकवृत्तिरूपादितः अन्योन्याश्रयात्–अव्यावृत्तस्य व्यावर्त्तकत्वायोगात् स्वाश्रयेण स्वस्य व्यावृत्तिस्तेन च स्वाश्रयव्यावृत्तिरिति। नापि रूपादयः स्वतो व्यावृत्ताः प्रमाणाभावात् सामान्याश्रयस्य स्वतो व्यावृत्तत्वादर्शनात्। अत एव परमाणवोपि न स्वतो व्यावृत्ताः। तस्माद्धर्मिग्राहकप्रमाणात्स्वतो व्यावृत्तत्वेन सिद्धाः विशेषा एव नित्यद्रव्यव्यावर्त्तकाः। तत्र तेऽव्यावृत्ताः कथं व्यावर्त्तका इति वक्तुं न शक्यते असिद्धिदशायामाश्रयासिद्धेः सिद्धिदशायां स्वतो व्यावृत्तत्वेनैव सिद्धत्वात् परमाणुरूपादिषु च विशेषास्वीकारे विशेषव्यावृत्तैस्तैरेव तेषां व्यावृत्तिसम्भवात्। तथा चान्यथानुपपत्तिप्रमाणादेकैकस्मिन् परमाणावेकैकविशेषो व्यावर्त्तक आवश्यकः। सोऽन्यत एव स्वतो व्यावृत्तः स्वयमव्यावृत्तस्य परव्यावर्त्तकत्वायोगात्। सामान्य-

लो नित्यद्रव्येत्युपादानादाकाशादिनित्यद्रव्येष्वपि परस्परभेदसि-द्धये लाघवाद्विशेष एवोचित इति ज्ञापितमित्यास्तां विस्तरः ॥१०॥

घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः ॥ ११ ॥

समवायं दर्शयति—घटादीनामिति। अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः संबन्धः स समवायः। समवायत्वं नित्यसम्बन्धत्वम्। तत्र प्रमाणन्तु—गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानम्। एतेन संयोगादिबाधात्समवायसिद्धिः। न च स्वरूपसंबन्धेन सिद्धसाधनम्—अर्थान्तरं वा, अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः। न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात्। न चैवमभावस्यापि वैशिष्ट्यं संबन्धान्तरं सिद्ध्येदिति वाच्यम्, तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात्—घटाभावस्य तत्र सत्त्वात् तस्य च नित्यत्वात्, अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात्, वैशिष्ट्यस्य च तत्र सत्त्वात्। मम तु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः। वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम्। इत्थञ्च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां संबन्धः ॥ ११ ॥

समवायं लक्षयति घटादीनामिति ॥ घटादीनामवयविनां कपालादाववयवे द्रव्येषु कथितेषु गुणकर्मणोः गुणानां कर्मणां च तेषु द्रव्यगुणकर्मसु जातेः द्रव्यत्वगुणत्वकर्मत्वादिजातेः चकारान्नित्यद्रव्येषु विशेषपदार्थस्य सम्बन्धः—इह कपाले घटोऽस्ति नीलमुत्पलं देवदत्तो गच्छति ब्राह्मणत्वजातिमानयं विशेषवान् परमाणुरित्यादिविशिष्टबुद्धिजनकः पदार्थः। तथाचावयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धो लाघवादेको नित्यः स

एव समवाय इत्यर्थः। एकत्वं चात्र न सङ्ख्या बाधात् किन्तु स्ववृत्तिपदार्थविभाजकोपाधिमत्प्रतियोगिकभेदशून्यत्वं समवायद्वयाभावात्। समवाये मानन्तु–कपाले घटः समवेतः पटस्तन्तुषु समवेत इत्यादिप्रत्यक्षमित्यक्षचरणतनयाः। गुणक्रियाजातिविशिष्टबुद्धयः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानं संयोगादिबाधसहकृतमिति कणभक्षतनयाः। लक्षणं त्वस्य नित्यत्वे सति सम्बन्धत्वम्। संयोगवारणाय सत्यन्तम्। कालादिवारणाय विशेष्यं सम्बन्धिभिन्नस्यैव सम्बन्धसङ्केतादित्यास्तां विस्तरः॥ ११॥

अभावं विभजते—

अभावस्तु द्विधा संसर्गोऽन्योन्याभावभेदतः।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च॥ १२॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते।

अभावस्त्विति। अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम्(१)। संसर्गेति। संसर्गाभावान्योन्याभावभेदादित्यर्थः। अन्योन्यभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते -प्रागभाव इति। संसर्गाभावत्वमन्योन्याभावभिन्नाभावत्वम्। अन्योन्याभावत्वं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। विनाश्यभावत्वं प्रागभावत्वम्। जन्याभावत्वं ध्वंसत्वम्। नित्यसंसर्गाभावत्वमत्यन्ताभावत्वम्। यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य सम्बन्धाघटकतया अत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः।

तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित्।

अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतं, श्यामघटे रक्तो नास्ति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं

(१) भावभिन्नत्वमित्यर्थः। ननु अत्र भावभिन्नत्वस्याभावत्वेऽभावत्वस्यान्यान्योभावगर्भतयाऽन्योन्याभावत्वस्य चाग्रेऽभावत्वघटितस्य बोध्यतयाऽन्योन्याश्रय इति चेन्न अभावत्वस्यान्योन्याभावगर्भस्याखण्डोपाधिरूपत्वाद्भावभिन्नत्वस्यान्यथा वाच्यत्वाद्वा न दोष इति।

ध्वंसं चावगाहते न तु तदत्यन्ताभावं तयोर्विरोधात् ।

नव्यास्तु तत्र विरोधे (१)मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत इति प्राहुः ।

नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेत् । न । अनन्ताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनाया एव लघीयस्त्वात् । एवञ्चाधाराधेयभावोऽप्युपपद्यते । एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमप्युपपद्यते । अन्यथा तत्तदधिकरणानां (२)तत्तदिन्द्रियाग्राह्यत्वात्प्रत्यक्षत्वं न स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तम्–अप्रत्यक्षत्वापत्तेः ॥ १२ ॥

अभावं विभजते अभावस्त्विति । द्रव्यादिभावषट्काभिन्नस्त्वित्यर्थः । द्विधा द्विप्रकारः एतत्कथनं घटादिभेदस्य घटत्वाद्यत्यन्ताभावेऽन्तर्भावनिरासाय पटे घटत्वं नास्तीति प्रतीतितो घटः पटो नेत्यादिप्रतीतेर्विजातीयत्वात् घटत्वे आधेयतासम्बन्धेन घटज्ञानाभावदशायामपि घटो नेतिप्रतीतेर्जायमानतया तस्यावश्यकत्वाच्च । संसर्गान्योन्याभावभेदतः–संसर्गाभावान्योन्याभावभेदादित्यर्थः । संसर्गाभावत्वम् अन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं तु भेदत्वं तद्वेदमिदं न भवतीति प्रतीतिबलादखण्डोपाधिः तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं वा । तत्रान्योन्याभावस्यैकविधत्वात् तद्विभागासम्भवात् संसर्गाभावं विभजते प्रागभाव इति । घटाद्युत्पत्तेः प्राक्कालवर्त्ती अभाव इह कपाले घटो भविष्यतीति प्रत्ययप्रमाणको घटोत्पत्त्यनन्तरमविद्यमानस्तथा चास्य विनाश्यभावत्वं लक्षणमित्यर्थः । तथा ध्वंसः मुद्गरप्रहारादिना घटो ध्वस्तो विनष्ट इत्यादिप्रतीतिसिद्धो नाशपदध्वंसपदाभिधेयस्तथा चास्य जन्याभावत्वं लक्षणमित्यर्थः । अपि अत्यन्ताभावः अत्यन्तं सदाऽभावो वायौ रूपं नास्तीत्यादिप्रतीतिसिद्धस्तथा चास्य नित्यसंसर्गाभावत्वं लक्षणमित्यर्थः । संसर्गाभावत्वप्रागभावत्वध्वंसत्वान्यखण्डोपाधय एवे-

---

(१) तद्वत्ताबुद्धौ प्रागभावावगाहितया तदभाववत्ताबुद्धेरेव प्रतिबन्धकत्वादिति भावः ।

(२) येनेन्द्रियेण या व्यक्तिर्गृह्यते तन्निष्ठा जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यत इति नियमादिति भावः ।

ति केचित् ॥ १२ ॥

एवं प्रागभावध्वंसात्यन्ताभावभेदात् आपन्नः प्राप्तः । त्रैविध्यमित्यनेन संसर्गाभावस्य त्रय एव विभागाश्चतुर्थो विभागो नास्ति मानाभावादिति ज्ञापितम् ॥ अत्रायं विशेषः—अत्यन्ताभावान्योन्याभावौ व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकौ विशिष्टधर्मावच्छिन्नप्रतियोगिताकौ उभयभिन्नौ च । तत्राद्यौ घटवति घटौ न स्तः घटौ न घटावित्यादिप्रतीतिसाक्षिकौ । द्वितीयौ केवलपुरुषवति केवलदण्डवति वा दण्डी पुरुषो नास्ति पुरुषो न दण्डीति प्रतीतिसाक्षिकौ । उभयाभिन्नौ च द्विविधौ–सामान्यधर्मावच्छिन्नप्रतियोगिताकौ विशेषधर्मावच्छिन्नप्रतियोगिताकौ च । तत्राद्यौ वह्निर्नास्ति घटो वह्निर्नेति धीविषयौ । द्वितीयौ तद्वह्निर्नास्ति तद्वह्निर्नेति धीविषयौ । न च यावद्विशेषाभाव एव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवृत्तेरभ्युपगमात् वह्नित्वावच्छिन्नप्रतियोगिताकत्वेन तादृशेन विशेषाभावकूटस्यैव सामान्याभावधीविषयत्वसम्भवात्सामान्याभावे मानाभाव इति वाच्यम् संज्ञामात्रभेदात् तादृशसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य तादात्म्येन सामान्याभावरूपत्वादित्यास्तां विस्तरः । तत्रापि भेदः केवलान्वय्येव । अत्यन्ताभावस्तु पुनर्द्विविधः–केवलान्वयी तद्भिन्नश्च । तत्राद्योऽव्याप्यवृत्तेः संयोगस्यावृत्तेर्गगनादेश्च अन्यस्तु व्याप्यवृत्तेर्वृत्तिमतो घटादेः । तत्राप्यव्याप्यवृत्तेरभावोऽप्यव्याप्यवृत्तिरेव भेदस्तु व्याप्यवृत्तिरेव । शाखायां वृक्षः कपिसंयोगी न मूले इति प्रतीतेर्भेदोऽप्यव्याप्यवृत्तिरिति नव्याः । अत्यन्ताभावस्यात्यन्ताभावः प्रतियोगिस्वरूप इति प्राञ्चः । अतिरिक्त इति नव्याः । भेदात्यन्ताभावः प्रतियोगितावच्छेदकस्वरूपः भिन्नभेदोऽनुयोगितावच्छेदकस्वरूपः भेदभेदस्त्वातिरिक्त एव । न चेयमनवस्था दोषाय प्रामाणिकत्वात् । प्रागभावध्वंसयोस्तु न सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं न वा संसर्गावच्छिन्नप्रतियोगिताकत्वं मानाभावात्किन्तु विशेषधर्मावच्छिन्नसंसर्गानवच्छिन्नप्रतियोगिताकत्वमेवेति संक्षेपः ॥ ननु सर्वेषामभावानामधिकरणात्मकत्वमेवास्तु किमतिरिक्तेन पदार्थेनेति चेत् । अनन्ताधिकरणात्मकत्वे गौरवप्रसङ्गात्, सत्यां गताघाधाराधेयभावप्रतीत्युपादानस्योचिततत्वात् रूपाद्यभावानां प्रत्य-

घस्त्वाऽनपवेक्ष्य तदधिकरणानां वायुप्रभृतीनामयोग्यत्वादित्यादयो विस्तरः ।

इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते—

सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ।। १३ ।।

सप्तानामिति । समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यं, समानो धर्म इति फलितार्थः । एवं विरुद्धो धर्मो येषां ते विधर्माणः तेषां भावो वैधर्म्यं, विरुद्धो धर्म इति फलितार्थः । ज्ञेयत्वं ज्ञानविषयता, सा च सर्वत्रैवास्ति । ईश्वरादिविज्ञानाविषयतायाः केवलान्वयित्वात्(१)। एवमभिधेयत्वप्रमेयत्वादिकं बोध्यम् ।। १३ ।।

साधर्म्यादिज्ञानं विना सम्यक् पदार्थज्ञानासम्भवात्सर्वेषां साधर्म्यं विशिष्य निरूपयिष्यन् प्रथममुपदर्शितरीत्या निरूपितानां सप्तानामाह सप्तानामिति । द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यं समानो धर्मः । ज्ञेयत्वं-ज्ञानविषयत्वम् । आदिपदादभिधेयत्ववाच्यत्वादेः परिग्रहः । अभिधेयत्वं-पदशक्यत्वम, वाच्यत्वं-शक्त्या प्रबोध्यत्वम् ॥ १३ ॥

द्रव्यादयः पञ्च भावा अनेके समवायिनः ।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ।। १४ ।।

द्रव्यादय इति । द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च । यद्यप्यनेकत्वमभावेऽप्यस्ति, तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम् । तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितार्थः । तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः । समवायित्वं च समवायसम्बन्धेन सम्बन्धित्वं न तु समवायवत्त्वं सामान्यादावभावात् ।

सत्तावन्त इति । द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः । गुणादिरिति ।

(१) अत्यन्ताभावाप्रतियोगित्वादित्यर्थः ।

यद्यपि (१)गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं, क्रियाशून्यत्वं च गगनादावतिव्याप्तम्, तथापि गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं च तदर्थः। नहि घटत्वादिकं द्रव्यत्वादिकं वा गुणवदवृत्ति कर्मवदवृत्ति वा, किन्तु गुणत्वादिकं तथा। आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ॥ १४ ॥

तत्र द्रव्यादिपञ्चानामाह द्रव्यादय इति। द्रव्यमादिर्येषां ते द्रव्यगुणकर्मसामान्यविशेषाः पञ्च ते भावरूपाः सन्तोऽनेके भवन्ति समवायवन्तश्च भवन्तीत्यर्थः। समवायस्तु भावोपि नानेकः प्रागेकत्वसाधनात्, अभावस्त्वनेकोऽपि न भाव इति च उभयनिरासः। ततश्च भावत्वे सत्यनेकत्वं समवायवत्त्वं च पञ्चानां साधर्म्यमक्षतम्। अनेकत्वमत्र न संख्या गुणादावव्याप्तेः, किन्तु स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणपदार्थविभाजकोपाधिमत्त्वम्, व्याप्नोति चेदं द्रव्यादिपञ्चसु-स्वं पदार्थविभाजकोपाधिः द्रव्यत्वादि तदाश्रयो द्रव्यादि तत्प्रतियोगिकान्योन्याभावेन द्रव्यान्तरादौ द्रव्यत्वादेः समानाधिकरणत्वात् समवाये तु न याति समवायान्योन्याभावस्य समवायेऽभावात् द्रव्यादौ सत्त्वेपि तत्र समवायत्वाभावात्। न च समवायवत्त्वं सामान्यविशेषयोरव्याप्तं तयोः समवेतशून्यत्वादिति वाच्यम् सामान्यविशेषप्रतियोगिकसमवायस्य प्रतियोगितासम्बन्धेन सामान्यविशेषयोः सत्वात् ॥

द्रव्यादित्रयाणामाह सत्तावन्त इति ॥ आद्यास्त्रयः द्रव्यगुणकर्माख्याः सत्तावन्तः समवायेन सत्ताजात्याश्रयाः, द्रव्यतो द्रव्यगुणकर्मणामेवोत्पत्तिदर्शनात् कार्यतावच्छेदकतयाङ्गीक्रियमाणा त्रयसाधारणी जातिः सत्ता सत्सदितिव्यवहारबीजं समवायेन द्रव्यगुणकर्मणां त्रयाणामेव जात्यादौ तु जातिः सतीत्यादिव्यवहारहेतुरेकार्थसमवायेन, ततश्च समवायेन सत्तावत्त्वं त्रयाणां साधर्म्यमदुष्टं बोध्यम्। गुणादीनां षण्णामाह गुणादिरिति ॥ निर्गुणक्रियः-निर्गते गुणक्रिये यस्मात्तादृशो गुणशून्यः क्रियाशून्यश्चेत्यर्थः। गुणकर्मसामान्यविशेष-

(१) उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति नियमात्। तन्नतगुणं प्रति तस्य कारणत्वात् कारणस्य च कार्यपूर्ववृत्तित्वावश्यकत्वादिति भावः।

समवायाभावानां गुणशून्यत्वं क्रियाशून्यत्वं च साधर्म्यमित्यर्थः । गुणशून्यत्वं गुणवदवृत्तिधर्मवत्त्वं क्रियाशून्यत्वं क्रियावदवृत्तिपदार्थविभाजकोपाधिमत्त्वं तेन प्रथमक्षणे घटादेर्निर्गुणत्वेऽपि गगनादेः सर्वदा निष्क्रियत्वेऽपि न तत्रातिव्याप्तिः—गुणवति क्रियावति चाविद्यमानस्य गुणत्वादेर्गुणादिष्वेव सत्त्वात् ॥ १४ ॥

सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥

सामान्येति । सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः । पारिमाण्डल्येति । पारिमाण्डल्यमणुपरिमाणम्, कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत्, तच्च न संभवति-परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात् महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात्(१) ।

एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च (२)बोध्याः । (३)इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम्, (४)ज्ञायमानसामान्यं न प्रत्यासत्तिः, ज्ञायमानं लिङ्गं नानुमितिकरणमित्यभिप्रायेणोक्तम् । आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वात्परममहत्परिमाणमाकाशादेर्बोध्यम् । तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये । तन्न । ज्ञानातिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वात् ॥ १५ ॥

---

(१) नचाणुजन्यस्याणुतरत्वमस्तु किं बाधकमिति वाच्यम् । तथा सति त्र्यणुकस्य प्रचाक्षुषत्वप्रसङ्गात् । (२) अकारणमिति शेषः ।

(३) ननु योगिप्रत्यक्षे पारिमाण्डल्यस्यापि विषयतया कारणत्वात् पारिमाण्डल्यभिन्नानामित्युक्तमत आह-इदमपीति । लौकिकप्रत्यक्ष एव विषयस्य कारणत्वमङ्गीकार्यं योगजस्थले योगबलेनैव सर्वप्रत्यक्षसंभवादिति भावः ।

(४) ज्ञायमानसामान्यस्य प्रत्यासत्तित्वेन ज्ञायमानहेतोरनुमितिकरणत्वेन च पारिमाण्डल्यस्य सामान्यलक्षणाप्रत्यासत्तिजन्यज्ञाने अनुमितौ च हेतुतया पारिमाण्डल्यभिन्नानामित्ययुक्तमत आह—ज्ञायमानेत्यादि ।

सामान्यादीनां चतुर्णामाह सामान्येति । जातिरादिर्येषां ते जातिविशेषसमवायाभावाः सामान्येन जात्या रहिताः । जातिरहितत्वं तेषां साधर्म्यमित्यर्थः । अयं भावः-द्रव्यादित्रये कार्यकारणभाववशादेव जातेः सिद्धेः साधितत्वात्सामान्यादौ च तदभावादनवस्थादिदोषप्रसङ्गाच्च न जातिः । तथाहि-सामान्यं यदि जात्यन्तरसाधारणसामान्यवत्स्यात्तदा तदपि सामान्यमविशेषात्सामान्यान्तरवत्स्यादिति सामान्यपरम्पराप्रसक्त्या अनवस्थापत्तेर्न सामान्यं सामान्यवत्—एवं विशेषोपि न सामान्यवान् तथासति गुणेन्तर्भावप्रसक्त्या स्व्यासिद्धिप्रसङ्गात्-निर्गुणत्वे सति कर्मभिन्नत्वे सति सामान्यवत एव गुणत्वात् । एवं समवायोपि न सामान्यवान्-समवायस्यैकत्वेन समवायत्वस्यैकव्यक्तिकतया जातित्वासम्भवात् तथासति समवायपरम्पराप्रसक्त्या अनवस्थाप्रसङ्गाच्च । एवमभावोपि न सामान्यवान्-समवायाभावात् । न च तत्रानुगतव्यवहारानुपपत्तिः तदुपाधिनैव तत्संभवात् । तस्मादाद्यास्त्रय एव जातिमन्त इति सिद्धम् ॥

तत्र कारणत्वं केषां तदाह—पारिमाण्डल्येति ॥ परिमाण्डल्यं परमाणुपरिमाणं तद्भिन्नानां सर्वेषां कारणत्वं साधर्म्यमित्यर्थः । लिङ्गज्ञानकारणतावादिनां नैयायिकानां मतमाश्रित्येदं बोध्यम् । ज्ञायमानलिङ्गकरणतावादिनां वैशेषिकानां नये तु परमाणुपरिमाणलिङ्गकानुमितौ परमाणुपरिमाणस्यापि हेतुतया यथाश्रुतप्रकृतग्रन्थस्यासङ्गतेः पारिमाण्डल्यादिभिन्नद्रव्यादित्रयाणामेव ज्ञातृधर्मातिरिक्तभावकार्यं प्रति कारणत्वमित्यर्थोऽवसेयः । आदिपदेन परममहत्त्वम् अन्त्यावयविरूपरसगन्धस्पर्शसंख्यापरिमाणादयो बोध्याः ॥१५॥

ननु कारणत्वं किम् अत आह—

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥

अन्यथेति । तस्य कारणत्वस्य ॥ १६ ॥

किं कारणमित्याकांक्षायां प्रकारान्तरस्य दुर्वचत्वाल्लाघवादिदमस्य कारणमितिधीविषयतया लिङ्गमतिरिक्तमेव तदित्येकदेशिनः । तन्न युक्तम्—अतिरिक्तकारणत्वकल्पनापेक्षया

तद्ग्रहकेऽनन्यथासिद्धत्वादिघटितधर्म एव तादृशत्वकल्पनस्योचितत्वादित्याशयवान् तदाह—अन्यथेति ॥ अनुपदमेव वक्ष्यमाणान्यथासिद्धिरहितस्य दण्डादेर्या नियता पूर्ववृत्तिता कार्यनियतपूर्ववर्त्तिजातीयता तत्कारणत्वमित्यर्थः । अन्यथासिद्धत्वशून्यत्वविशिष्टकार्यनियतपूर्वभाविजातीयत्वं कारणत्वमिति यावत् । तन्तुरूपादेः कारणत्ववारणार्थं शून्यान्तम् । तत्पटत्वावच्छिन्ने अन्यत्र क्लृप्तनियतेत्याद्यन्यथासिद्धिमत्यपि पटत्वावच्छिन्ने तद्रासभत्वादिनाऽनन्यथासिद्धतद्रासभादावतिव्याप्तिवारणाय नियतेति । तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः पूर्ववर्तीति । स्वरूपयोग्यवनस्थदण्डादिसंग्रहाय जातीयत्वमिति । तज्जातीयत्वं च येन रूपेणानन्यथासिद्धता तेन रूपेण ग्राह्यम्, तेन द्रव्यत्वेन दण्डसजातीये रासभे नातिप्रसङ्गः, तथाच कार्यतावच्छेदकान्यथासिद्ध्यनिरूपकतावच्छेदकधर्मवत्त्वं कार्याव्यवहितप्राक्कालावच्छेदेन कार्यत्वावच्छेदकसम्बन्धेन कार्याधिकरणवृत्तितावच्छेदकान्यथासिद्ध्यनिरूपकतावच्छेदकधर्मवत्त्वं वा कारणत्वमिति पर्यवसितम् । तस्य कारणत्वस्य ॥ १६ ॥

समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥
यत्समवेतं कार्यं भवति ज्ञेयन्तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥ १८ ॥

तत्रेति । समवायिकारणे आसन्नं प्रत्यासन्नं कारणं (१)द्वितीयम्—असमवायिकारणमित्यर्थः । अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात्, एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात्, एवं ज्ञानादीनामपीच्छाद्यसमवायिकारणत्वं स्यात्, तथापि पटासमवायिकारणलक्षणे तुरी(२)तन्तुसंयोगभिन्नत्वं देयम् । तुरीतन्तुसं-

(१) पटसमवायिकारणतन्तुसमवेततन्तुत्वादावतिव्याप्तिवारणाय कारणमिति । तन्तुत्वस्यान्यथासिद्धत्वेन न दोष इति भावः ।

(२) तुरीतन्तुसंयोगस्य पटं प्रति कुतो नासमवायिकारणत्वमिति नाशङ्कनीयम् । तुरीतन्तुसंयोगनाशे पटनाशापत्तेः, असमवायिकारणनाशस्य द्रव्यनाशजनकत्वात् ।

योगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव। एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति, तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम्। आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव ॥ अत्र समवायिकारणे प्रत्यासन्नं द्विविधं—कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च। आद्यं यथा–घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम् तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति। द्वितीयं यथा—घटरूपं प्रति कपालरूपमसमवायिकारणम्। तत्र स्वगतरूपादिकं प्रति समवायिकारणं घटः, तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति। तथाच क्वचित्समवायसंबन्धेन क्वचित्स्वसमवायिसमवेतत्वसंबन्धेनेति फलितोऽर्थः। इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्यवसन्नम्। आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः ॥१७॥१८॥

त्रैविध्यमेव दर्शयति–समवायीति। स्पष्टम् ॥ १७ ॥

समवायिकारणमाह–यत्समवेतमिति ॥ कार्यं प्रागभावप्रतियोगि घटादिकं यत्समवेतं भवति यस्मिन् कपालादौ समवेतं सद्भवति समवायेनोत्पद्यते तत् कपालादिकं तस्य कार्यस्य समवायिकारणं बोध्यमित्यर्थः।

असमवायिकारणमाह–तत्रासन्नमिति ॥ तत्र समवायिकारणे आसन्नं समवायेन स्वसमवायिसमवेतत्वसम्बन्धेन वा सम्बद्धम् अथ च जनकं तदसमवायिकारणमित्यर्थः। समवायिकारणेऽतिव्याप्तिवारणायासन्नमिति। तन्तुत्वादावतिव्याप्तिवारणाय जनकमिति। तत्र समवायेन यथा–तन्तूनां संयोगः पटस्य, पटसमवायिकारणेषु तन्तुषु संयोगस्य समवायेन सत्त्वात् पटस्य च जनकत्वात्। स्वसमवायिसमवेतत्वसम्बधेन यथा–तन्तुरूपं पटरूपस्य, समवायिकारणे पटे तन्तुरूपसमवायिनि तन्तौ समवेततन्तुरूपस्य स्वसमवायिसमवेतत्वसम्बन्धेन विद्यमानत्वात् पटरूपस्य च जनकत्वात्। एवं

सर्वत्र यथायोग्यमवगन्तव्यम् । आद्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नमथ च जनकं तृतीयं निमित्तकारणं यथा—तुरीवेमादिकम् । वस्तुतः कारणभेदगर्भं न निमित्तकारणलक्षणं किन्तु कारणताभेदगर्भं—समवाय्यसमवायिकारणतान्यकारणतावत्त्वं निमित्तकारणत्वमिति यावत् । तेनात्मनो ज्ञानादिकं प्रति कालस्य कालघटसंयोगं प्रत्यभिन्ननिमित्तोपादानत्वेपि न हानिः ॥ १८ ॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह—येनेत्यादिना ।

येन सह पूर्वभावः कारणमादाय वा यस्य ।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९ ॥
जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥

यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता न रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः । यथा घटं प्रति दण्डत्वमिति ।

द्वितीयमन्यथासिद्धमाह—कारणमिति । यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः, किन्तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते, तदन्यथासिद्धम् । यथा दण्डरूपम् ।

तृतीयमाह—अन्यं प्रतीति । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते, तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटादिकं प्रत्याकाशस्य । तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात् । आकाशत्वं हि शब्दसमवायिकारणत्वम् । एवञ्च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रतिं जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम् । ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत्, पञ्चमीति गृहाण । नन्वाकाशस्य शब्दं प्रति जनकत्वे किम(१)वच्छेदकमिति चेत्, कवत्वादिकं विशेषपदार्थो वेति ।

---

(१) आकाशत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावादिति भावः । बहूनां वर्णानां विनिगमनाभावेन कारणतावच्छेदकत्वे गौरवादाह विशेषपदार्थो वेति ।

चतुर्थमन्यथासिद्धमाह---जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रतिं पूर्ववृत्तित्वं गृह्यते, तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वेऽन्यथासिद्धिः । कुलालत्वेन जनकत्वे त्विष्टापत्तिः—कुलालमात्रस्य घटं प्रति जनकत्वात् ।

पञ्चममन्यथासिद्धमाह---अतिरिक्तमिति ।अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणम्, अनेकद्रव्यवत्त्वमन्यथासिद्धम् । तत्र हि महत्त्वमवश्यं क्लृप्तं तेनानेकद्रव्यवत्त्वमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमकमिति वाच्यं, महत्वत्त्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ १९ ॥ २० ॥

अन्यथासिद्धत्वशून्यस्य कारणत्वमुक्तम् अन्यथासिद्धाश्च कति ? तत्राह-येनेति ॥ यन लघुधर्मसम्बन्धादिमता दण्डादिना सह यस्य तद्रहितस्य दण्डत्वादेः पूर्वभावः कार्यपूर्ववृत्तिता तदन्यथासिमित्यर्थः । येन रूपेण यत्कार्यं प्रति कारणस्य पूर्ववृत्तित्वं गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धं यथा घटं प्रति दण्डत्वमिति यावत् ।

द्वितीयमाह-कारणमादायेति । यस्य स्वतन्त्रान्वयव्यतिरेकरहितस्य कारणमादाय गृहीत्वैव यत्कार्यं प्रति पूर्वभावोऽन्वयव्यतिरेकौ तत्कार्यं प्रति तदन्यथासिद्धं यथा घटं प्रति दण्डरूपादिकमित्यर्थः ॥

तृतीयमाह-अन्यं प्रतीति । यत् यस्य अन्यं प्रति यत्कार्यकारणान्यं प्रति पूर्वभावे पूर्ववृत्तित्वे ज्ञात एव पूर्वभावाविज्ञानं यत्कार्यं प्रति पूर्ववृत्तित्वग्रहस्तस्य तत्रान्यथासिद्धत्वम्, यथाकाशस्य घटे आकाशत्वेन कारणत्वेऽन्यथासिद्धत्वम्, आकाशत्वस्य शब्दसमवायिकारणत्वरूपत्वात् घटकारणान्यशब्दपूर्ववर्त्तित्वं ज्ञात्वैव घटपूर्ववर्त्तित्वं ज्ञातव्यमित्यन्यथासिद्धत्वम् ॥ १९ ॥

कारणान्यं प्रतीतिव्याख्यानादितो भिन्नं चतुर्थमाह—जनकं प्रतीति ॥ यस्य यत्कार्यजनकं प्रति पूर्ववर्त्तित्वमपरिज्ञाय न किन्तु पूर्ववर्त्तित्वं ज्ञात्वैव यत्कार्यपूर्ववर्त्तित्वं गृह्यते तस्य तत्रान्यथासिद्धत्वं यथा कुलालेन कुलालपितुः तत्रास्य साक्षादहेतुत्वेन कुलाले घटपू-

र्ववर्तित्वं गृहीत्वैव तद्द्वारा तस्य तद्ग्रहात् । नचैवं व्यापारेण व्यापारिणोऽन्यथासिद्धापत्तिः, यत्र जन्यस्य पूर्वपूर्वभावं गृहीत्वैव जनकस्य तद्ग्रहस्तत्रैव जन्येन जनकस्यान्यथासिद्धत्वं यत्र तु जनकस्य पूर्ववर्तित्वं गृहीत्वा जन्यस्य तद्ग्रहस्तत्र न जन्येन जनकस्यान्यथासिद्धत्वमिति सिद्धान्तात् स्वर्गं प्रति स्वजन्यापूर्वद्वारा यागादेः करणत्वस्य प्रमाणसिद्धत्वादित्यास्तां विस्तरः ॥

पञ्चममाह—अतिरिक्तमिति ॥ नियतः-यदा यत्र कार्यं तदा तत्र पूर्वकाले विद्यमानमिति नियमविशिष्टः आवश्यकः अवश्यं क्लृप्तः पूर्वभावोऽन्वयव्यतिरेकित्वं यस्य ताद्दृशात् दण्डादितो यत् अतिरिक्तं भिन्नं तदन्यथासिद्धं यथा घटं प्रति रासभादिकम्। अवश्यक्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेव तत्संभवे तदतिरिक्तं रासभादिकं कदाचित्तत्सहभूतं न कारणं व्यभिचारित्वादिति यावत् ॥ २० ॥

एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥
तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥

रासभादिरिति । यद्यपि यत्किञ्चिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववृत्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि संभवे रासभोऽन्यथासिद्ध इति भावः । एतेष्विति । एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः—तेनैव परेषां चरितार्थत्वात् । तथा हि--दण्डादिभिरवश्यक्लृप्तनियतपूर्ववृत्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमकमिति वाच्यम्, दण्डत्वस्य कारणत्वे (१)दण्डघटितपरम्परायाः संबन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं संभवति ॥ २१ ॥ २२ ॥

एतानेव गणयति-एते पञ्चेत्यादिना । एतेषु पञ्चप्रकारेषु मध्ये

(१) स्वाश्रयसंयुक्तत्वरूपपरम्परया इत्यर्थः ।

असौ पञ्चमप्रकारः, सर्वेषामत्रैवान्तर्भावात्। तथाहि--नियतावश्यकपूर्वभाविनो दण्डादयस्तेभ्योऽतिरिक्तास्तु रासभवद्दण्डत्वदण्डरूपगगनकुलालपित्रादयोऽपीति तेषामप्यत्रैवान्तर्भावः। ननु तर्ह्यवश्यंक्लृप्तेत्याद्येकविधमेवान्यथासिद्धं वाच्यं किमित्यन्याभिधानमिति चेत्, नानाविधलाघवकृतावश्यकत्वप्रपञ्चार्थं तदभिधानमित्यन्यत्र विस्तरः॥ २१॥ २२॥

समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ २३ ॥

समवायीति । स्पष्टम् ।

गुणकर्मेति । असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं नतु गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम् । (१)अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः । तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि नाव्याप्तिः ॥ २३ ॥

कारणत्वव्यवस्थामाह---समवायिकारणत्वमिति । समवायेन कार्यं प्रति तादात्म्येन जनकत्वलक्षणं समवायिकारणत्वं द्रव्यस्यैव न गुणादीनामित्यर्थः । एतेन जन्यभावसमवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिरित्यपि लभ्यते द्रव्यगुणकर्मणामुत्पत्तिदर्शनात् ।

तर्ह्यसमवायिकारणत्वं कस्य ? तत्राह--गुणकर्ममात्रवृत्ति गुणकर्मणोरेव वृत्ति, असमवायिहेतुत्वं कार्यसमवायिनि समवायसमवायघटितसामानाधिकरण्यान्यतरसम्बन्धेन विद्यमानत्वे सति जनकत्वरूपमसमवायिकारणत्वम्, समवायेन कार्यं प्रति समवायादिना गुणक्रिययोरेव कारणत्वदर्शनादिति भावः ॥ २३ ॥

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।

अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं

(१) ननु साधर्म्यप्रकरणे वैधर्म्यकथनमयुक्तमित्याशङ्कायामाह—अथवेति । सत्ताभिन्नद्रव्यत्वरूपजातिमाति द्रव्येऽतिव्याप्तिवारणाय वृत्त्यन्तम् । तत्रैव सत्ताजातिमादायातिव्याप्तिवारणाय सत्ताभिन्नेति । तत्रैव द्रव्यगुणान्यतरत्वरूपधर्ममादायातिव्याप्तिवारणाय जातीति ।

साधर्म्यमित्यर्थः । आश्रितत्वं तु समवायादिसम्बन्धेन(१) वृत्तिमत्त्वं—विशेषणतया नित्यानामपि कालादौ वृत्तेः ॥

तत्र समवेतासमवेताविभागं दर्शयिष्यन्नाह—अन्यत्रेति । नित्यद्रव्येभ्योऽन्यत्र पृथिव्यप्तेजोवायुपरमाणुमनःकालाकाशात्मदिग्भ्यो भिन्नानां भावानां आश्रितत्वं वृत्तिमत्त्वं तच्चात्र समवायेन बोध्यं, तेन नित्यानां कालादौ वृत्तावपि न हानिः । तथाच नित्यद्रव्याणामसमवेतभावत्वं नित्यद्रव्याभिन्नानां भावानां समवेतत्वं साधर्म्यमिति लब्धम् । समवायस्यापि समवायात्मकेन स्वरूपसम्बन्धेन वर्तमानतयोपदर्शितसाधर्म्यं समवायसाधारणमिति बोध्यम् ।

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—

क्षित्यादीनां नवानां तु द्रव्यत्वगुणयोगिता ॥ २४ ॥

क्षित्यादीनामिति । स्पष्टम् ॥ २४ ॥

पृथिव्यादीनां नवानां लक्षणमाह क्षित्यादीनामिति । द्रव्यत्व—जातिरुपदर्शितप्रमाणसिद्धम्, गुणयोगिता गुणाश्रयत्वम्—एतद्द्वयं नवद्रव्यलक्षणमित्यर्थः ॥ २४ ॥

क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥

क्षितिर्जलमिति । पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्वं कर्मवत्त्वं वेगवत्त्वं च साधर्म्यम् । नच यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं(२) तत्राव्याप्तिरिति वाच्यम्, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । मूर्तत्वमपकृष्टपरिमाणवत्त्वम्(३), तच्च तेषामेव—गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् । पूर्ववत् कर्मवत्त्वं—कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्, वेगवत्त्वं—वेग-

(१) सर्वाधारतानियामककालिकसंबन्धातिरिक्तसम्बन्धेन ।
(२) परत्वापरत्वयोः कारणीभूतापेक्षाबुद्धेरनुत्पादात्परत्वापरत्वबुद्धिर्यत्र नोत्पन्नेत्यर्थः ।
(३) अविभुवृत्तिपरिमाणवत्त्वमित्यर्थः ।

चक्षुरिन्द्रियत्वव्याप्यजातिमत्त्वं च बोध्यम् ॥ २५ ॥

परिच्छिन्नापरिच्छिन्नविभागं दर्शयिष्यन्नाह-क्षितिरिति । पृथिव्यप्तेजोवायुमनसां परत्वमपरत्वं मूर्तत्वं क्रियावत्त्वं वेगवत्त्वं च साधर्म्यमित्यर्थः ॥ मूर्तत्वमियत्तावच्छिन्नपरिमाणवत्त्वम्, तथाच क्षित्यादय एव पञ्चामी परिच्छिन्ना इति भावः ॥ २५ ॥

कालखात्मदिशां सर्वगतत्वं परमं महत् ।
क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥ २६ ॥

कालेति । कालाकाशात्मदिशां सर्वगतत्वं सर्वमूर्तसंयोगित्वं परममहत्त्वं च । परममहत्त्ववत्त्वं जातिविशेषः, (१)अपकर्षानाश्रयपरिमाणत्वं वा ।

क्षित्यादीति । पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम् । तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं(२) बोध्यम् । तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभान(३)विषयत्वात्तद्वति आत्मनि नातिव्याप्तिः । न वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः—तस्यापि स्वरूपयोग्यत्वात् । महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम् । (४)अथवा आत्मावृत्तिविशेषगुणवत्त्वम् ।

चत्वारीति । पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम् ॥ २६ ॥

के ते परिच्छिन्नास्तत्राह—कालेति । कालाकाशात्मदिशां सर्वगतत्वं सर्वमूर्त्तसंयोगित्वं-संयोगेन सर्वमूर्त्तवृत्तित्वं वा, परमं महत्-परममहत्परिमाणवत्त्वं साधर्म्यमित्यर्थः । हस्तवितस्त्याद्यवच्छे-

---

(१) परममहत्वत्त्वस्य जातित्वसाधकप्रमाणाभावादाह अपकर्षेति ।

(२) बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयजातिमदित्यर्थः ।

(३) ज्ञानलक्षणासंनिकर्षजन्यं ज्ञानमुपनीतभानमुच्यते । 'ज्ञातो घटः' इति ज्ञाने घटे ज्ञानं विषयतया प्रकारीभूय भासते । तत्र घटांशे चक्षुःसंयोगो लौकिकसंनिकर्षः । ज्ञानांशे तु ज्ञानलक्षणारूपोऽलौकिक इति नातिव्याप्तिरिति भावः ।

(४) ननु चक्षुरादिगतगुणनामनुद्भूतत्वेन बहिरिन्द्रियग्रहणायोग्यत्वाच्चक्षुरादावव्याप्तिरित्याशंक्याहाथवेति । मनसि दैशिकपरत्वापरत्वमादायाव्याप्तिवारणाय विशेषेति ।

वत्त्वाभावेऽपि कालादेः परिमाणवत्त्वं परमाण्वादेरिव द्रव्यत्वेनैव साधनीयं प्रकृते चेतरबाधात् परमं महदिति भावः । अत एवापरिच्छिन्ना इति भावः ॥

परिच्छिन्नापरिच्छिन्नेषु मध्ये कानि भूतपदवाच्यानि तत्राह—क्षित्यादीति । पृथिव्यप्तेजोवाय्वाकाशाः पञ्च भूतानि भूतपदवाच्यानि बहिरिन्द्रियग्राह्यवृत्तिगुणत्वव्याप्यजातिमद्विशेषगुणवत्त्वात् । अस्ति हि तादृशो गुण आकाशे शब्दः वायौ स्पर्शः तेजसि रूपं जले रसः पृथिव्यां गन्ध इति दिक् ।

तत्रापि द्रव्योत्पत्तिनिर्वाहकं स्पर्शवत्त्वं चतुर्णामेवेत्याह—चत्वारीति । पृथिव्यप्तेजोवायवः स्पर्शगुणवन्ति स्पर्शवत्त्वमेतेषां साधर्म्यमित्यर्थः ॥ २६ ॥

द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥

द्रव्यारम्भ इति । पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वम् । नच द्रव्यानारम्भके घटादावव्याप्तिः, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ।

आकाशशरीरिणामिति । आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं साधर्म्यमित्यर्थः । आकाशस्य विशेषगुणः शब्दः । स चा(१)-व्याप्यवृत्तिः—यदा किञ्चिदवच्छेदेन शब्द उत्पद्यते तदान्यावच्छेदेन तदभावस्यापि सत्त्वात् । क्षणिकत्वं च—तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । योग्यविभुविशेषगुणानां (२)स्वोत्तरवर्तिगुणनाश्यत्वात्प्रथमशब्दस्य द्वितीयशब्देन नाशः । एवं ज्ञानादीनामपि । ज्ञानादिकं यदाऽऽत्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽस्त्येव । एवं ज्ञानादिकमपि क्षणद्वयावस्थायि । इत्थं चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः ।

---

(१) अव्याप्यवृत्तित्वं—च स्वप्रतियोगित्व–स्वसामानाधिकरण्योभयसंबन्धेनाभावविशिष्टत्वम् ।
(२) स्वपदं नाश्यत्वाभिमतपरम् ।

पृथिव्यादौ रूपादिर्विशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम् । पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीत्यतो विशेषगुणेत्युक्तम् । नच रूपादीनामपि कदाचित्तृतीयक्षणे नाशसंभवात्क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यम्, (१)चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात् । (२)अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति क्षणचतुष्टयं तु न किमपि जन्यज्ञानादिकं तिष्ठति । रूपत्वादिकं तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्तते इति तद्व्युदासः । ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज्ज्ञानत्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम् । (३)यद्याकाशजीवात्मनोः साधर्म्यं, तदा जन्येति न देयम्—द्वेषत्वादिकमादाय लक्षणसमन्वयात् । परममहत्त्वस्य तादृशागुणत्वात्–(४)चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमाद्द्वित्वादीनामपि तथात्वात्तद्वारणाय विशेषेति । (५)त्रिक्षणवृत्तित्वं वा वाच्यम् । इच्छात्वादिकमादायात्मनि लक्षणसमन्वयः ॥ २७ ॥

एतत्कथनस्य प्रयोजनमाह । द्रव्यारम्भ इति । समवायेन द्रव्योत्पत्तिः चतुर्षु पृथिव्यप्तेजोवायुषु भवति द्रव्यसमवायिकारणत्वमेषां चतुर्णां साधर्म्यमित्यर्थः । द्रव्यसमवायिकारणवृत्तिद्रव्यविभाजकोपाधिमत्त्वमिति यावत् तेन घटादौ समवायेन द्रव्योत्पत्त्यभावेपि नाव्याप्तिः–तादृशजातेः पृथिवीत्वादिकस्य सत्त्वात् ।

विभूनां मध्येऽपि विशेषमाह–अथाकाशेति । आकाशात्मनामव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं च साधर्म्यमित्य-

---

(१) चतुःक्षणवृत्ति यज्जन्यं रूपादि तदवृत्तिर्या जातिः ज्ञानत्वादिः तद्वद्विशेषगुणवत्त्वमित्यर्थः ।

(२) चतुःक्षणपर्यन्तानुधावनप्रयोजनमाह–अपेक्षाबुद्धिरिति ।

(३) शरीरिणामित्यत्र मूले शरीरिपदस्य यथाश्रुतार्थकत्वाभिप्रायेणाह–यद्याकाशजीवात्मनोरिति ।

(४) जन्यपदानुपादाने परममहत्त्वत्वस्य चतुःक्षणवृत्तिवृत्तित्वात् परममहत्त्वमादाय कालादावतिव्याप्तिरित आह–चतुर्थेति ।

(५) प्रथमोपस्थितत्वरूपलाघवमाश्रित्याह त्रिक्षणेति

र्थः। आकाशेऽव्याप्यवृत्तिः क्षणिकश्च विशेषगुणः शब्दः, आत्मनि तु ज्ञानेच्छादिस्तादृश इति लक्षणसमन्वयः। विशेषगुणा रूपादयोऽपि तद्वत्त्वं घटादावपीत्यत उक्तम्–अव्याप्यवृत्तीति। रूपादयस्तु न तथा, किन्तु संयोगादयस्तद्वत्त्वं कालादावपीत्यत उक्तं–विशेषेति। विशेषगुणलक्षणं त्वग्रे वक्ष्यते। अव्याप्यवृत्तित्वं त्वेकदेशवृत्तित्वं तच्चावच्छिन्नवृत्तिकत्वं–वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नस्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वम् वा, नातः शब्दरूपोभयत्वादिना रूपादेरभावस्य रूपाधिकरणघटादौ सत्त्वेऽपि रूपादेरव्याप्यवृत्तित्वम्। ईश्वरसंग्रहाय प्रतियोगितावच्छेदकेत्यादि। तथाच तादृशधर्मवाद्विशेषगुणवत्त्वं प्रथमलक्षणं बोध्यम्। तत्र क्षणिकत्वं—शब्दज्ञानादीनां योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नविभुविशेषगुणनाश्यत्वानियमेन तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। इदं चापेक्षाबुद्धिभिन्नानां जन्यानां बोध्यम् अपेक्षाबुद्धेश्चतुर्थक्षणे नाशात्, इत्थं च क्षणिकेतरं यदपेक्षाबुद्धिभिन्नं जन्यं तदवृत्तिजातिमद्विशेषगुणवत्त्वं द्वितीयलक्षणं बोध्यम्। एतेन कस्याचिद्रूपादेः क्षणिकत्वेऽपि न हानिः। ननु प्रहरादिकालोपाधीनां ज्ञानधाराकल्पनापेक्षया ज्ञानस्य तावत्कालस्थायित्वकल्पनमेवोचितं लाघवादिति चेन्न प्रतियोगितया योग्यात्मविशेषगुणनाशं प्रति एकाधिकरण्यावच्छिन्नस्वपूर्ववर्तित्वसम्बन्धेन विशेषगुणत्वेन कारणत्वाज्ज्ञानादेः सामग्रीबलात् द्वितीयक्षणोत्पन्नज्ञानादिना नाशेन तादृशकल्पनाया बाधितत्वादिति वदन्ति॥ २७॥

रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः॥ २८॥

रूपेति। पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वञ्चेत्यर्थः। न च चक्षुरादीनां भर्जनकपालस्थवह्नेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यम्, तत्रापि तेजस्त्वेन रूपानुमानात्। एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम्। न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्वमव्याप्तमिति वाच्यम् द्रवत्ववद्वृत्ति-

द्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् घृतजतुप्रभृतिषु पृथिवीषु जलेषु द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात्तत्र च पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्षण समन्वयः। न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तम्—(१)अतिव्याप्तं च रूपादाविति वाच्यम्, चाक्षुषलौकिक(२)प्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति। गुरुणीति। (३)गुरुत्ववत्त्वं रसवत्त्वं च पृथिवीजलयोरित्यर्थः। न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानां च रसादिमत्त्वे किं मानमिति वाच्यम्, तत्रापि पृथिवीत्वादिना तदनुमानात्।

द्वयोरिति। पृथिवीतेजसोरित्यर्थः। नच नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यम्, नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्॥ २८॥

परिच्छिन्नानां मध्ये विशेषमाह—रूपद्रवत्वेति। प्रथमास्त्रयः पृथिव्यप्तेजांसि रूपद्रवत्वप्रत्यक्षयोगिनः समवायेन रूपवन्तः द्रवत्ववन्तः विषयतया प्रत्यक्षवन्तश्चेत्यर्थः। प्रत्यक्षं चात्र संयोगेन बहिरिन्द्रियजन्यत्वं ग्राह्यं तेनात्मनो रूपादेश्च प्रत्यक्षवत्त्वेपि न तत्रातिव्याप्तिः आत्मनो बहिरिन्द्रियेण रूपादेश्च संयोगेनाप्रत्यक्षत्वात

गुरूणीति। द्वे पृथिवीजले पृथिवीजलयोर्गुरुत्ववत्त्वं रसवत्त्वं च साधर्म्यमित्यर्थः।

द्वयोः पृथिवीतेजसोः नैमित्तिकः तेजःसंयोगजन्यः द्रवः द्रवत्वम्। तत्र पृथिव्यां घृतादौ तेजसि स्वर्णादौ। नैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं तयोः साधर्म्यमित्यर्थः। तेन न घटवह्न्यादावव्याप्तिः॥ २८॥

आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः

---

(१) योगिप्रत्यक्षविषयत्वात्परमाणावव्याप्त्यभावादाह—अतिव्याप्तं चेति।

(२) घटो वायुमानिति वाय्वंशे उपनीतभानात्मकघटविशेष्यकचाक्षुषविषयवायुवृत्तिद्रव्यत्वव्याप्यवायुत्वजातिमति वायावतिव्याप्तिवारणाय लौकिकेति।

(३) गुरुत्वं—रक्तिकमाषकतोलकत्वादि। एतदुपलक्षणम्। पतनवत्त्वमित्यपि बोध्यम्।

आत्मान इति । पृथिव्यप्तेजोवाय्वाकाशात्मानां विशेषगुणवत्त्वमित्यर्थः ।

यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥

यदुक्तमिति । ज्ञेयत्वादिकं विहायेति बोध्यम् । तत्तु कस्यापि न वैधर्म्यम्—केवलान्वयित्वात् ॥ २९ ॥

आत्मेति । आत्मानश्चेतना जीवाः ईशश्च । भूतवर्गः पृथिव्यप्तेजोवायुगगना विशेषगुणयोगिनः समवायेन विशेषगुणवन्तः । तत्र ज्ञानादि गुणवत्त्वमात्मनां रूपादिगुणवत्त्वं पृथिव्यादीनां साधर्म्यमित्यर्थः । सर्वत्र काले कालिकसम्बन्धेनातिव्याप्तिवारणाय समवायेनेति ।

साधर्म्यकथनेनैव वैधर्म्यमपि प्राप्तमित्याह—यदुक्तमिति । यत् गुणवत्त्वादिकं यस्य द्रव्यस्य साधर्म्यमुक्तं तत् गुणवत्त्वं इतरस्य गुणादेः वैधर्म्यं विरुद्धो धर्मः । एवमन्यत्रापि बोध्यम् । इदंच ज्ञेयत्वादिकं विहाय बोध्यं तेषां केवलान्वयित्वात् ॥ २९ ॥

वायोर्नवैकादश तेजसो गुणाः
जलक्षितिप्राणभृतां चतुर्दश ।
दिक्कालयोः पञ्च षडेव चाम्बरे
महेश्वरेऽष्टौ मनसस्तथैव च ॥ *

तत्र क्षित्यादीनां नवाना गुणवत्त्वमुक्तम् , तत्रापि कस्य कति गुणास्तत्राह—वायोर्नवेति । *

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ।
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वे च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३२ ॥
धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।

---

* दिनकरीधृता इयं कारिका चंद्रिकाकारमतेन प्रक्षिप्ता दृश्यते ।

५

संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥

स्पर्शादय इति । ते च पञ्च संख्यादयः खे आकाशे ॥३०–३४॥

के ते इत्याकांक्षायामाह—स्पर्शादयोऽष्टाविति । स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानि एवमन्यत्रापि सुगमम् । ॥ ३० ॥ ३१ ॥

बुद्ध्यादिषट्कं-बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः । संख्यादिपञ्चकं-संख्यापरिमाणपृथक्त्वसंयोगविभागाः । भावना-स्मृतिहेतुर्भावनाख्यः संस्कारः । आत्मनः जीवस्य ।

ते च संख्यादयः पञ्च खे आकाशे ॥ ३२ ॥ ३३ ॥

मानसे मनसि ॥ ३४ ॥

साधर्म्यवैधर्म्ये निरूप्य संप्रति प्रत्येकं पृथिव्यादिकं निरूपयति—

तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।
षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥

तत्र क्षितिरित्यादिना । गन्धहेतुरिति । (१)गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम् । तथाहि—पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति, (२)अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः । नच पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यम्, तत्रापि गन्धसत्त्वात् । अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते, कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते । भस्मनो हि पाषाणध्वंसजन्यत्वात्पाषाणोपादानोपादेयत्वं सिद्ध्यति—यद्द्रव्यं यद्द्रव्यध्वंसजन्यं

(१) गंधहेतुत्वं कालादावतिव्याप्तमतो व्याचष्टे गन्धेति ।

( २ ) अन्यथा गंधत्वावच्छिन्नं प्रति हेतुत्वानङ्गीकारे । आकस्मिकत्वापत्तेः—नियतकारणानियम्यत्वापत्तेरित्यर्थः ।

तत्तदुपादानोपादेयमिति व्याप्तेः । दृष्टं चैतत्खण्डपटे महापटध्वंसजन्ये । इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वं, तथाच तस्यापि गन्धवत्त्वे बाधकाभावः । नानारूपेति । शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्तते, नतु जलादौ—तत्र शुक्लस्यैव सत्त्वात् । पृथिव्यां तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसंभवात् । न च यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिरिति वाच्यम्, रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, (१)रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात । (२)वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वान्न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः ।

षड्विध इति । मधुरादिभेदेन यः षड्विधो रसः स पृथिव्यामेव । जले मधुर एव रसः । अत्रापि पूर्ववद्रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः(३) । गन्धास्त्विति । द्विविध इति वस्तुस्थितिमात्रं नतु द्विविधगन्धवत्त्वं लक्षणं—द्विविधत्वस्य व्यर्थत्वात् । द्वैविध्यं च सौरभासौरभभेदेन बोध्यम् ॥ ३५ ॥

'तत्र शास्त्रस्य त्रेधा प्रवृत्तिः—उद्देशो लक्षणं परीक्षा चे'ति न्यायभाष्यकारवचनात्पदार्थानां 'द्रव्यं गुण' इत्यादिग्रन्थेन नाममात्रेण वस्तुसंकीर्तनरूप उद्देशः कृतः । न्यूनाधिकसंख्याव्यवच्छेदफलको विभागश्च कृतः । क्षितिजलतेजःप्रभृतीनां परस्परविरुद्धजातीयानामनुगमार्थं समानजातीयत्वसम्पादकं साधारणं लक्षणं च 'द्रव्यत्वगुणयोगिता'इत्यादिनोक्तम् । अधुना विशिष्य ज्ञानाय स्वरूपतटस्थभेदेन द्विविधमसाधारणधर्मरूपं लक्षणं प्रत्येकं दर्शयिष्यन् तत्रादौ द्रव्येषु प्रथमोद्दिष्टाया पृथिव्या आह—तत्र क्षितिरिति । तत्र तेषु नवद्रव्येषु मध्ये क्षितिः पृथिवी गन्धहेतुः गन्धसमवायिकारणम् । हेतुत्वं का-

(१) द्वित्वस्यापेक्षाबुद्धिविशेषविषयत्वरूपत्वेन गौरवादाह रूपनाशेति ।

(२) पीलुपाकमते इत्यर्थः ।

(३) अन्यथा पूर्ववत् नानारसानधिकरणेऽव्याप्तिः स्यादिति भाव ।

लेप्यस्तीत्यत उक्तं समवायिकारणमिति ॥ तत्र गन्धवती पृथ्वी इति विहाय हेतुरिति पठनं गन्धसमवायिकारणतावच्छेदकत्वेन पृथिवीत्वजातिसिद्धये, तथाच गन्धवत्त्वं गन्धसमवायिकारणवच्छेदकतया सिद्धं पृथिवीत्वं च पृथिव्या लक्षणमिति भावः॥लक्षणे तान्येव पदानि ग्राह्याणि यैरव्याप्त्यतिव्याप्त्यसम्भवादयो दोषा निराक्रियन्ते। लक्ष्यैकदेशावृत्तित्वमव्याप्तिः यथा गोः कपिलत्वम्। अलक्ष्यवृत्तित्वमतिव्याप्तिः यथा गोः शृङ्गित्वम्। लक्ष्यमात्रावर्तनमसम्भवः यथा गोः एकशफवत्त्वम् एतद्दूषणत्रयरहितो धर्मो लक्षणं स एवासाधारणधर्म उच्यते। लक्ष्यतावच्छेदकव्याप्यत्वे सति लक्ष्यतावच्छेदकव्यापकत्वमसाधारणत्वं यथा प्रकृत एव पृथिवीत्वमिति। अत्र पृथिवीत्वं स्वरूपलक्षणं–यावल्लक्ष्यकालावस्थायित्वात्। गन्धवत्त्वं तटस्थं–आगन्तुकत्वात्। व्यावृत्तिर्व्यवहारश्च लक्षणप्रयोजनम्। नन्वत्र सुरभ्यसुरभिकपालारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादनादव्याप्तिः। न च तत्र गन्ध प्रतीतिनिर्वाहाय चित्रगन्धोऽभ्युपेयत इति वाच्यम्, तत्रावयवगन्धेनैव गन्धप्रतीतिनिर्वाहे चित्रगन्धवैयर्थ्यादिति चेत्। न। गन्धसमवायिकारणवृत्तिद्रव्यविभाजकजातिमत्त्वस्य तदर्थत्वात्। नानारूपेति। शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधरूपवतीत्यर्थः। शुक्लनीलाद्युभयरूपवद्वृत्तिद्रव्यविभाजकजातिमतीति यावत्। अतो न केवलपटादावव्याप्तिः–तादृशजातेः पृथिवीत्वस्य सत्त्वात्।

षड्विधास्त्विति। मधुराम्लकटुकषायतिक्तक्षारभेदेन षट्प्रकार इत्यर्थः। षड्विधत्वं मधुराद्यनेकरसवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वम्। तेन यत्रैक एव रसस्तत्र नाव्याप्तिः-तादृशजातेः पृथिवीत्वस्य सत्त्वात्। गन्धास्त्विति। सौरभासौरभभेदेन द्विप्रकार इत्यर्थः ॥ ३५ ॥

स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः।

स्पर्श इति। तस्याः–पृथिव्याः। अनुष्णाशीतस्पर्शवत्त्वं वायावपि वर्तत इत्युक्तं पाकज इति। इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम्। पाकजस्पर्शवत्त्वमात्रं तु लक्षणम्—अधिकस्य वैयर्थ्यात्। यद्यपि पाकजस्पर्शः पटादौ नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः।

स्पर्श इति । तस्याः—पृथिव्याः । अनुष्णाशीतपाकजः—न उष्णोऽनुष्णः न शीतोऽशीतः अनुष्णश्चासावशीतश्चेत्यनुष्णाशीतस्तादृशश्चासौ पाकजश्चेत्यर्थः । अत्र वाय्वादावतिव्याप्तिवारणाय पाकज इति । लक्षणं तु पाकजस्पर्शमात्रम्, इतरांशस्तु स्वरूपकथनमात्रम् । न च पटादावव्याप्तिः तत्र पाकजस्पर्शाभावादिति वाच्यम्, पाकजस्पर्शवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वस्य विवक्षितत्वात् । न च पृथिव्यां स्पर्शो नास्त्येव किन्त्वौष्ण्यशैत्याभावः ।

नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥
अनित्या तु तदन्या स्यात्सैवावयवयोगिनी ।
सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥

नित्येति । सा पृथिवी द्विविधा—नित्या अनित्या चेत्यर्थः । अणुलक्षणा परमाणुरूपा पृथिवी नित्या । तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्वाप्यनित्येत्यर्थः । सैव—अनित्या पृथिव्येवावयववतीत्यर्थः ।

(१) ननु अवयविनि किं मानं परमाणुपुञ्जैरेवोपपत्तेः । न च परमाणूनामतीन्द्रियत्वाद्घटादेः प्रत्यक्षं न स्यादिति वाच्यम्, एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात् । यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम् । न चैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम्, एको महान् धान्यराशिरिति(२)वदुपपत्तेः । मैवम् । परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षायोग्यत्वात्(३) । (४)दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात् । न च

(१) बौद्धः शंकते नन्विति ।

(२) यथा धान्यसमूहस्यैकत्वादेकं इति प्रतीतिरेवं संयोगविशेषस्यैव महत्त्वात्मकतया महानिति प्रतीतिस्तथा परमाणुपुञ्जेष्वपीति भावः ।

(३) स्वभावतोऽयोग्यानां परमाणूनां परस्परसंयोगमात्रेण योग्यत्वं कथं स्यादित्यर्थः ।

(४) दूरस्थत्वस्य प्रतिबन्धकतया तस्याप्रत्यक्षत्वं न तु स्वाभाविकमप्रत्यक्षत्वमिति भावः ।

तदानीं दृश्यपरमाणुपुञ्जस्यो(१)त्पन्नत्वान्न प्रत्यक्षत्वेऽपि विरोध इति वाच्यम्, अदृश्यस्य दृश्यानुपादानत्वात्, अन्यथा चक्षुरूष्मादिसन्ततेः कदाचिद्दृश्यत्वप्रसङ्गात् । न चातितप्ततैलादौ कथमदृश्यदहनसन्ततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्, तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात् । न चादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यम् । यतो न दृश्यत्वमदृश्यत्वं वा कस्यचित्स्व(२)भावादाचक्ष्महे । किन्तु महत्त्वोद्भूतरूपादिकारणसमुदायवतो दृश्यत्वं तदभावे चादृश्यत्वम् । तथाच त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वं, न तु द्व्यणुकादेस्तदभावात् । नहि त्वन्मतेऽपि सम्भवतीदं—परमाणौ महत्त्वाभावात् । इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम् । तेषां चावयवावयवधाराया अनन्तत्वे मरुसर्षपयोरपि साम्यप्रसङ्गः, अतः क्वचिद्विश्रामो वाच्यः, यत्र तु विश्रामस्तस्यानित्यत्वेऽसमवेतकार्योत्पत्तिप्रसङ्गात्तस्य नित्यत्वम् । महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः । न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यम् । त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः(३) सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः । न चेदमप्रयोजकम्, अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यवत्त्वस्य(४) प्रयोजकत्वात् । न चैवंक्रमेण तदवयवधारापि सिध्येदिति वाच्यम्, अनवस्थाभयेन तदसिद्धेरिति ॥

(१) क्षणभंगवादिनां मते परमाणूनामुत्पत्तिस्वीकारादिति भावः ।

(२) स्वभावात् कारणनैरपेक्ष्यात् । तथाच त्वन्मतेऽतीन्द्रियत्वं प्रत्यक्षत्वं च स्वाभाविकमित्यतीन्द्रियस्यैन्द्रियकपदार्थोत्पादकत्वे चक्षूरूपादौ कदाचिद्दृश्यत्वमापादितमस्मन्मते तु कारणबलात् त्र्यणुकस्य प्रत्यक्षत्वेऽपि तदभावात् द्व्यणुकस्यातीन्द्रियत्वसंभवाददृश्यस्य दृश्यकारणत्वेऽपि न क्षतिरिति भाव इति रामरुद्री ।

(३) द्व्यणुकरूपा इत्यर्थः ।

(४) सावयवत्वस्येत्यर्थः ।

साचेति। सा—कार्यरूपा पृथिवी त्रिविधा, शरीरेन्द्रियविषयभेदादित्यर्थः ॥ ३६ ॥ ३७ ॥

विभजते—नित्येति। नित्यानित्यभेदेन द्विप्रकारेत्यर्थः। तत्र का नित्या? तत्राह—नित्या स्यादिति। अणुलक्षणा—परमाणुस्वरूपा त्रसरेण्वादिकार्यानुमेया नित्या उत्पत्तिविनाशरहिता मूलकारणत्वादिति भावः ॥ ३६ ॥

तदन्या परमाणुभिन्ना कार्यरूपा घटादिका अनित्या उत्पत्तिविनाशवती। कुतः? तत्राह—सा चेति। चो हेतौ, यतः सा कार्यरूपा अवयवयोगिनी अवयवसमवेता तथाच सावयवत्वात् जन्या विनाशिनी चेत्यर्थः।

कार्यरूपां विभजते—सा च त्रिधेति। च पुनः सा अवयवस्वरूपा देहेन्द्रियविषयभेदात् त्रिप्रकारेत्यर्थः। तत्र देह—आत्मनो भोगायतनं शरीरम्। यदवच्छिन्नात्मनि सुखदुःखान्यतरसाक्षात्काराख्यो भोगो जायते तद्भोगायतनम्॥ इन्द्रियं शरीरसंयुक्तं ज्ञानकरणमतीन्द्रियमिति मुनिर्निर्दिष्टलक्षणकम्। विषयो—विषिणोति बध्नातीन्द्रियाद्याकर्षणादिहेतूनितिव्युत्पत्त्या बन्धको देहेन्द्रियभिन्नो भोग्यं भोगो गन्धादिमान् लोकशास्त्रादिप्रसिद्धः ॥ ३७ ॥

तत्र देहमुदाहरति—

योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम्।
विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥

योनिजादिरिति। योनिजमयोनिजं चेत्यर्थः। योनिजमपि द्विविधं—जरायुजमण्डजञ्च। (१)जरायुजं—मानुषादीनाम्। अण्डजं—सर्पादीनाम्। अयोनिजं स्वेदजोद्भिज्जादिकम्। स्वेदजाः—कृमिदंशाद्याः(२)। उद्भिज्जाः—तरुगुल्माद्याः। नारकिणां शरीरमप्ययोनिजम्। न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम्, गन्धादिमत्त्वस्यैव प्रमाण-

(१) गर्भवेष्टनचर्मपुटकं जरायुः। आदिना पशुमृगादिपरिग्रहः।

(२) अत्र आदिना देवादिपरिग्रहः। तच्छरीराणामुत्पत्तेर्धर्मविशेषसहितेभ्योऽणुभ्य एव स्वीकारादिति भावः।

त्वात् । न च (१)क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यम्, तथा सति जलत्वपृथिवीत्वादिना सङ्करप्रसङ्गात्(२) । न च तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यम् , क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानाद्गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः । तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम् । शरीरत्वं तु न जातिः–पृथिवीत्वादिना (३)साङ्कर्यात् । किन्तु चेष्टाश्रयत्वम्(४), वृक्षादीनामपि चेष्टासत्त्वान्नाव्याप्तिः । न च वृक्षादेः शरीरत्वे किं मानमिति वाच्यम्, आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात् । तत्रैव किं मानमिति चेत्, भग्नक्षतसंरोहणादिना तदनुमानात् । यदि हस्तादौ शरीरव्यवहारो न भवति, तदान्त्यावयवित्वेन विशेषणीयम् । न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यम्, तादृशे प्रमाणाभावात् ।(५)अथवा चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम् , अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत् । मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः । न च नृसिंहशरीरे कथं लक्षणसमन्वयः? तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावाज्जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यम्, कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात् । इन्द्रियमिति । घ्राणेन्द्रियं

---

(१) क्लेदः-क्षरणं ऊष्मा–पाकः । आदिशब्दाद्व्यूहावकाशपरिग्रहः । व्यूहः- क्रिया, अवकाशः- मुखादावन्नादिगत्यप्रतिबन्धः ।

(२) शरीरत्वाभाववति जले वर्तमानस्य जलत्वस्य जलत्वाभाववति तैजसशरीरे वर्तमानस्य शरीरत्वस्य च मनुष्यशरीरे सत्त्वादेवं पार्थिवत्वमादाय संकरो बोध्यः।

(३) पृथिवीत्वं विहाय शरीरत्वं जलीयशरीरे शरीरत्वं विहाय पृथिवीत्वं घटादौ उभयोः समावेशः पार्थिवशरीर इत्यादिरीत्या संकरो बोध्यः ।

(४) चेष्टात्वं जातिविशेषश्चष्टत इति प्रत्यक्षसिद्धः ।

(५) मृतशरीरे शरीरत्वेन प्रत्यभिज्ञाते चेष्टाभावादव्याप्तिमाशङ्क्याह अथवेति । घटत्वमादाय घटेऽतिव्याप्तिवारणाय चेष्टावदिति । हस्तादावतिव्याप्तिवारणायान्त्यावयवीति । पृथिवीत्वरूपतादृशजातिमति घटादावतिव्याप्तिरतो लक्षणान्तरमाह—अन्त्यावयवीति । अन्त्यावयविमात्रवृत्तिरित्यनेन द्रव्यत्वादिजातिव्युदासः । चेष्टावद्वृत्तिरित्यनेन घटत्वादिव्युदासः ।

पार्थिवमित्यर्थः । पार्थिवत्वं कथम् ? इति चेदित्थम्-घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत् । न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यम्, परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् । न च नवशराव(गत)गन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यम्, तस्य सक्तुरसाभिव्यञ्जकत्वात् । (१)यद्वा परकीयेति न देयम्—वायूपनीतसुरभिभागस्य दृष्टान्तत्वसम्भवात् । न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्राभिव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यम्, द्रव्यत्वे सतीति विशेषणात् । विषय इति । उपभोगसाधनं विषयः । सर्वमेव हि कार्यजातमदृष्टाधीनम् । यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परम्परया वा जनयत्येव । नहि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । तेन द्व्यणुकादिब्रह्माण्डान्त सर्वमेव विषयो भवति । शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरोपन्यासः शिष्यबुद्धिवैशद्यार्थः॥ ३८॥

तत्र देहमुदाहरति-योनिजादिरिति । योनितो जातं योनिजमादिर्यस्य-योनिजमयोनिजश्चेत्यर्थः । तत्रापि योनिजं जरायुजाण्डजभेदेन द्विविधम् । जरायुजं मनुष्यादीनाम् । अण्डजं सर्पादीनाम् । अयोनिजं स्वेदजोद्भिदादिकम् । स्वेदजाः—कृमिदंशाद्याः, उद्भिदस्तरुगुल्माद्याः । नारकिणां शरीरमयोनिजम् । एतेषां पार्थिवत्वं तु गन्धवत्त्वाद्बोध्यम् । तथाच गन्धवच्छरीरं पार्थिवशरीरं बोध्यम् । इन्द्रियमाह-इन्द्रियमिति । जिघ्रत्यनेनेति घ्राणं गन्धग्राहकं तदेव लक्षणं यस्य तदित्यर्थः । गन्धग्राहकमिन्द्रियं पार्थिवेन्द्रियमिति यावत् । घ्राणेन्द्रियस्य पार्थिवत्वं रूपादिमध्ये गन्धस्यैवाभिव्यञ्जकत्वाद्बोध्यम् । विषयमाह—विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त इति । गन्धवानिति शेषः । गन्धवान् देहेन्द्रियभिन्नः पार्थिवविषय इति भावः ॥ ३८ ॥

---

(१) परकीयपदानुपादानेन लाघवमभिप्रेत्याह यद्वेति ।

जलं निरूपयति—

**वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।**
**स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥**

वर्णः शुक्ल इति । स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिः सिद्ध्यति । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं, तथापि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्, तस्य च नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमादिति चेत् । न । जन्यस्नेहजनकतावच्छेदिकाया जन्यजलत्वजातेः सिद्धौ तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः । शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं—वर्णः शुक्ल इति । न तु शुक्लरूपवत्त्वं लक्षणम् । अथवा (१)नैमित्तिकद्रवत्ववदवृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, (२)अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः । तेन स्फटिकादौ नातिव्याप्तिः । रसस्पर्शाविति । जलस्य मधुर एव रसः, शीत एव स्पर्शः । तिक्तरसवदवृत्तिमधुररसवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् तदर्थः। तेन शर्करादौ नातिव्याप्तिः (शीतेतरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः ।) ननु शुक्लरूपमेवेति कुतः ? कालिन्दीजलादौ नीलिमोपलब्धेरिति चेत् । न । नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासंभवात्, कालिन्दीजले नीलप्रतीतिस्त्वाश्र-

---

(१) द्रव्यत्वव्याप्यवायुत्वजातिमादाय वायावतिव्याप्तिवारणाय रूपवद्वृत्तीति । पृथिवीत्वादिजातिमादाय पृथिव्यादावतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववदवृत्तीति । साक्षादिति पटत्वादिवारणाय। द्रव्यत्वसाक्षाद्व्याप्यत्वं च द्रव्यत्वव्याप्याव्याप्यत्वं नतु द्रव्यत्वव्याप्यत्वस्यापि तत्रान्तर्भावः रूपवद्वृत्तित्वविशेषणेनैव रूपत्वादीनां वारणात्तन्निवेशे प्रयोजनाभावात् ।

(२) कारिकानुसारिशुक्लपदघटितलक्षणमाहाभास्वरेति । अत्रापि पृथिव्यामतिव्याप्तिवारणाय असमानाधिकरणान्तम् । जलत्वस्य शुक्लरूपसामानाधिकरण्यादसंभव इति शुक्लेतरेति । तेजस्यतिव्याप्तिवारणायाभास्वरेति । अन्यपदव्यावृत्तिः पूर्ववद्बोध्या ।

यौपाधिकी, अत एव वियति विक्षेपे धवलिमोपलब्धिः । अथ जले माधुर्ये किं मानम् ? न हि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते । न च नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यम्, तस्याश्रयौपाधिकत्वात्, अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेत् । न । हरीतक्यादिभक्षणस्य जलरसाभिव्यञ्जकत्वात् । न च हरीतक्यामेव जलोष्म संयोगाद्रसान्तरोत्पत्तिरिति वाच्यम्, कल्पनागौरवात्-पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकम् । जम्बीररसादौ त्वाश्रयौपाधिकी तथा प्रतीतिः । एवं जन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलत्वं, तदवच्छिन्नजनकतावच्छेदकं जलत्वं बोध्यम् । घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव । तेजःसंयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव—तत्र पाकासंभवात् । स्नेहस्तत्रेति । घृतादावपि तदन्तर्वर्तिजलस्यैव स्नेहः-जलस्य स्नेहसमवायिकारणत्वात्, तेन जल एव स्नेह इति मन्तव्यम् । द्रवत्वमिति । सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः, (१)तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः । तैलादावपि जलस्य द्रवत्वं (२)स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ॥ ३९ ॥

जलं निरूपयति-वर्णः शुक्ल इति । शुक्ल एवेत्यर्थः । अभास्वर इति शेषः । नन्वेतत् केवलशुक्लपृथिव्यामतिव्याप्तमिति चेत् । न । शुक्लरूपेतरासमानाधिकरणाभास्वररूपवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वस्य तदर्थत्वात् । मधुरशीतलाविति । हरीतक्यामलक्यादिभक्षणानन्तरं पीते जले माधुर्यस्यैवोपलम्भाज्जले मधुररसवत्त्वम्, तथा स्पर्शस्य शीतलस्यैव सदोपलम्भाच्छीतस्पर्शवत्त्वं चापां लक्षणमित्यर्थः। तत्र मधुररसवत्त्वमित्यस्य पृथिव्यामतिव्याप्तिवारणाय मधुरेतररसासमानाधिकरणरससमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्यम् । शीतस्पर्शवत्त्वमित्यस्योत्पन्नवि-

(१) तदवच्छिन्नजनकतावच्छेदकं सांसिद्धिकद्रवत्वावच्छिन्नजनकतावच्छेदकम् । तदेव—अन्यजलत्वमेव, तदवच्छिन्नजमकतावच्छेदकं-जलत्वमिति भावः।

(२) तेनैव चातितप्ततैलादौ जलबिन्दुप्रक्षेपे सद्य एव ज्वालाजटिलस्याग्नेरुद्भवो बोध्यः।

वद्दे जलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्यम् । शीतं शिलातलमित्यादौ जलस्पर्शादेव तज्ज्ञानमिति न तत्रातिव्याप्तिः । क्वचिज्जले शुक्लेतररूपस्य मधुरेतररसस्योष्णस्पर्शस्य चोपलम्भस्तु पार्थिवान्तरादिद्रव्योपाधिकः॥ जलादेव धारणाकर्षणहेतुसंयोगात्मकसंग्रहस्य दर्शनात् कठिनैर्घृतादिभिर्द्रुतैः काञ्चनादिभिश्च गोधूमादिवर्णपिण्डीभावस्यादर्शनाच्च जलगुण एव स्नेह इत्याशयेनाह–स्नेहस्तत्रेति । तत्र-जले । अत्रापि पूर्ववदव्याप्तिवारणाय स्नेहसमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्यम्॥ घृतादौ तु संयुक्तसमवायेन जलगतादेव तज्ज्ञानमिति नातिव्याप्तिः । द्रवत्वं सांसिद्धिकद्रवत्वेन जलस्यासाधारणमित्याह–द्रवत्वमिति । सांसिद्धिकं सहजसिद्धं पृथिव्यादाविवाग्निसंयोगनिरपेक्षमिति यावत् । प्राग्वज्जातिघटितमिदमपि बोध्यम् । तैलादौ तु परिदृश्यमानं सांसिद्धिकं द्रवत्वं तदन्तर्गतजलस्यैवेत्यर्थः । ननु तर्हि तैलसन्निपाते कथं दहनप्रकर्ष इति चेत्, स्नेहप्रकर्षादित्यवेहि ॥ ३९ ॥

नित्यतादि प्रथमवत्किन्तु देहमयोनिजम् ।
इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥

प्रथमवदिति । पृथिव्या इवेत्यर्थः । तथाहि जलं—द्विविधं नित्यमनित्यं च । परमाणुरूपं नित्यं, द्व्यणुकादिकं सर्वमनित्यमवयवसमवेतं च । अनित्यमपि त्रिविधं–शरीरेन्द्रियविषयभेदात् । पृथिवीतो यो विशेषस्तमाह—किन्त्विति । देहमयोनिजम्–अयोनिजमेवेत्यर्थः जलीयं शरीरं वरुणलोके प्रसिद्धम् । इन्द्रियमिति । जलीयमित्यर्थः । तथाहि—रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत् । रसनेन्द्रियसंनिकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् । विषयं दर्शयति—सिन्धुहिमादिरिति । सिन्धुः समुद्रः । हिमं तुषारः । आदिपदात्सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः । न च हिमकरकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम्, ऊष्मणा विलीनस्य तस्य जलवत्त्वस्य प्रत्यक्षसिद्धत्वात्, यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति

व्याप्तेर्जलोपादानोपादेयत्वासिद्धेः(१) । अदृष्टविशेषेण द्रवत्वप्रतिरोधात्करकादीनां काठिन्यप्रत्ययस्य भ्रान्तत्वात् ॥ ४० ॥

नित्यतादिप्रथमवदिति। यथा पृथिवी नित्याऽनित्या च अनित्यापि सावयवा देहेन्द्रियविषयभेदेन त्रिधा, एवं जलमपि नित्यमनित्यञ्च अनित्यमपि सावयवं देहेन्द्रियविषयभेदेन त्रिविधमित्यर्थः। तत्र पृथिवीतो यो विशेषस्तमाह—अयोनिजमिति। अयोनिजमेवेत्यर्थः। वरुणलोके प्रसिद्धं तदिति भावः। इन्द्रियमाह-इन्द्रियं रसनामिति। रसयत्यनेने।ति रसग्राहकं जलीयेन्द्रियमिति शेषः। रसग्राहकमिन्द्रियं जलीयेन्द्रियमिति यावत्। तस्य जलीयत्वं तु रूपादिषु मध्ये रसस्यैवाभिव्यञ्जकत्वाद्बोध्यम्। विषयमाह-सिन्धुहिमादिरिति। समुद्रः हिमञ्चादिर्यस्य सरिदादेः सः स्नेहादिमान् देहेन्द्रियाभिन्नो जलीयविषय इति भावः। अत्र सर्वत्र जलत्वजातिसिद्धिस्तु स्नेहशीतस्पर्शादिसमवायिकारणतावच्छेदकतया बोध्या, नित्यजलेपि तद्वृत्तित्वं लाघवात्तत्सम्बन्धकल्पनातोऽवसेयमित्यास्तां विस्तरः ॥ ४० ॥

तेजो निरूपयति—

उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।
नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥ ४१ ॥

उष्णः स्पर्श इत्यादिना। उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः। इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः। तस्य परमाणुवृत्तित्वं तु जलत्वस्येवानुसन्धेयम्(२)। न चोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यम्, तत्राप्युष्णस्पर्शस्य सत्त्वात्, किन्तु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः। एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः॥ रूपमित्यादि। वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवाच्छुक्लरूपाग्रहः॥ ननु तद्रू-

(१) तथा चोक्तव्याप्त्या करकादिध्वंसजन्यजले करकोपादानोपादेयत्वासिद्धावुभयोरुपादानयोरेकत्वग्रहेण जलोपादानस्य च जलत्वनिर्णयेन तदुपादेयकरकादेरपि जलत्वानिर्णय इत्यर्थः।

(२) तथा च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं जन्यतेजस्त्वं, जन्यतेजस्त्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकं च तेजस्त्वमित्यनुसंधेयमित्यर्थः।

पाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेत्। न। अन्यदीयरूपेणैव धर्मिणो ग्रहसम्भवात् शङ्खस्येव पित्तपीतिम्ना। वह्नेस्तु शुक्लं रूपं नाभिभूतं किन्तु तदीयं शुक्लत्वमभिभूतमित्यन्ये(१)॥ नैमित्तिकामिति। सुवर्णादिरूपे तेजसि तत्सत्त्वात्। नच नैमित्तिकद्रवत्ववत्त्वं दहनादावव्याप्तं—घृतादावतिव्याप्तं चेति वाच्यम्,(२)पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात्। पूर्ववदिति। जलस्येवेत्यर्थः। तथाहि तत् द्विविधं—नित्यमनित्यं च। नित्यं परमाणुरूपं तदन्यदनित्यमवयवि च। तच्च त्रिधा—शरीरेन्द्रियाविषयभेदात्। शरीरमयोनिजमेव, तच्च सूर्यलोकादौ प्रसिद्धम्॥४१॥

तेजो निरूपयति—स्पर्श उष्ण इति(३)। अत्राप्युत्पन्नविनष्टेऽव्याप्तिवारणायोष्णस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्यम्। उष्णं जलमिति-प्रतीतेस्तेजःसम्बन्धानुविधायित्वान्न तत्रातिव्याप्तिः। शुक्लभास्वरं-परप्रकाशकम्। शुक्लपदस्य स्वरूपकीर्त्तनत्वाद्भास्वररूपवत्त्वं प्रागवज्जातिघटितं लक्षणं बोध्यम्। वैश्वानरादौ शुक्लस्य सत्त्वेपि पार्थिवेनाभिभवादनुपलम्भः। नैमितिकद्रवत्वमपि लक्षणमित्याह· नैमित्तिकेति। वन्ह्यादावतिव्याप्तिवारणाय घृतादिपृथिव्यामतिव्याप्तिवारणाय च पृथिव्यवृत्तिनैमितिकद्रवत्ववद्वृतिद्रव्यत्वापरजातिमत्त्वे तात्पर्यम्। पूर्ववत्—जलवत्, तथाहि—जलवत्तेजो द्विविधं-नित्यमनित्यं च। परमाणुस्वरूपं नित्यं तदन्यदनित्यं सावयवम्। तच्च त्रिविधं—शरीरेन्द्रियविषयभेदात् शरीरमयोनिजमेव सूर्यलोके प्रसिद्धम्॥४१॥

अत्र यो विशेषस्तमाह—

**इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः।**

इन्द्रियमिति। ननु चक्षुषस्तैजसत्वे किं मानमिति चेत्, चक्षुस्तैजसं—परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत्।

---

(१) मतान्तरमाह वह्नेस्त्विति। सुवर्णादिरूपे तेजसि तत्सत्त्वादिति। तेन नासम्भव इति भावः।

(२) पृथिव्यां घृतादौ नैमित्तिकद्रवत्वसत्त्वेन तद्वृत्तिपृथिवीत्वजातिमादायातिव्याप्तिवारणाय पृथिव्यवृत्तीति। पृथिव्यवृत्तिजलत्वजातिमादाय जले—पृथिव्यवृत्तिवायुत्वादिकमादाय वायौ अतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववद्वृत्तीति। वायुतेजोन्यतरत्वमादाय वायावतिव्याप्तिवारणाय जातीति।

(३) दिनकरीकानुरोधाच्चन्द्रिकाकारमतेन 'स्पर्श उष्णस्तेजसस्तु' इति कारिकावलीपाठो बोध्यः

प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्तिवारणाय प्रथमं परकीयेति। घटादेः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति। अथवा प्रभाया दृष्टान्तत्वसम्भवादाद्यं परकीयेति न देयम्। चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्। विषयं दर्शयति—वह्नीति।

ननु सुवर्णस्य तैजसत्वे किं मानमिति चेत्। न। सुवर्णं तैजसम् असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमान(जन्य)द्रवत्वा(धिकरणत्वा)त्, यन्नैवं तन्नैवम्, यथा पृथिवीति। न चाप्रयोजकं, पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्यचात्यन्ताग्निसंयोगनाश्यत्वात्। ननु पीतिमगुरुत्वाश्रयस्य पार्थिवस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेत्। न। जलमध्यस्थमसीक्षोदवत्तस्याद्रुतत्वात्।

अपरे तु पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपापराद्यवृत्तिदर्शनात्तत्प्रतिबन्धकं विजातीयद्रवद्द्रव्यं कल्प्यते। तथाहि—अत्यन्ताग्निसंयोगी (४)पीतिमगुरुत्वाश्रयो विजातीयरूपप्रतिबन्धकद्रवद्द्रव्यसंयुक्तः अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात् जलमध्यस्थपीतपटवत्। तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात्॥

अत्र यो विशेषस्तमाह—इन्द्रियमिति। नयति पश्यति रूपादिकमनेनेति नयनं चष्टेऽनेनेति व्युत्पत्त्या चक्षुःपदाभिधेयं, तैजसमिति शेषः। रूपग्राहकमिन्द्रियं तैजसेन्द्रियमिति यावत्। तस्य तैजसत्वं तु प्रभावत्स्पर्शाव्यञ्जकत्वे सति परकीयरूपाभिव्यञ्जकत्वाद्बोध्यम्। विषयं दर्शयति—वन्हिस्वर्णादिरिति। वन्हिः स्वर्णं चादिर्यस्य सः अग्निसुवर्णरजतताम्रविद्युज्जाठराग्न्यादिः रूपादिमान् देहेन्द्रियभिन्नतैजसविषय इति भावः॥ तथाच विषयात्मकं तेजोऽपि चतुर्विधं—भौमं आकरजं दिव्यं औदर्यं चेति। तत्र भौमं—इन्धनादिनोत्पद्यमानं वन्ह्यादिकम्। आकरजं—खनिजं स्वर्णादिकम्। दिव्यं—दिवि भासमानं सूर्यविद्युदादि। औदर्यं—उदरे भवं भुक्तान्नपचनहेतुर्जाठरपदाभिधेयम्।

---

(१) आग्निसंयोगस्य तैजससुवर्णेपि सत्त्वादुक्तं पीतिमेति। साध्ये विजातियपदमुद्दिष्टलाभार्थम्। इतौ सत्यन्तमग्निसंयोगाभाववति पूर्वरूपविजातीयरूपानाधारे घटे व्यभिचारवारणायेत्यादि बोध्यम्।

नतु सुवर्णस्य कठिनस्पर्शवत्त्वात् पीतरूपवत्त्वात् गुरुत्ववत्त्वाच्च पार्थिवत्वमेव युक्तं न तेजस्त्वं भास्वररूपाभावात् उष्णस्पर्शाभावाच्चेति चेत्, अत्र वदन्ति—पृथिवीद्रवस्यात्यन्तानलसंयोगेनोच्छेदस्य दर्शनात् जलद्रवत्वस्य च स्वाभाविकत्वात् तादृशसंयोगेनापि सुवर्णद्रवत्वस्यानाशादस्वाभाविकत्वात्। तद्द्रवत्वस्य पृथिवीजलद्रवत्वभेदसिद्धौ तदाश्रयस्य तेजस्त्वमेवेति ॥ तेजस्त्वजातिसिद्धिस्तु तत्र सर्वत्रोष्णस्पर्शादिसमवायिकारणतावच्छेदकतया बोध्या। नित्येऽपि तद्वृत्तित्वं प्रागुक्तदिशा ज्ञेयम् ॥

वायुं निरूपयति—

अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥ ४२ ॥
तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।
पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥

अपाकज इति । अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तमपाकज इति । अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीत इति । एतेन वायवीयो विजातीयः स्पर्शो दर्शितः, तज्जनकतावच्छेदकं वायुत्वमिति भावः । एष वायुः स्पर्शादिलिङ्गकः—वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते(१), विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां (२)धृत्या शाखादीनां कम्पेन च वायोरनुमानात् । यथा च वायोर्न प्रत्यक्षं तथाग्रे वक्ष्यते । पूर्ववदिति । वायुर्द्विविधो—नित्योऽनित्यश्च । परमाणुरूपो नित्यः, तदन्योऽनित्योऽवयवसमवेतश्च । सोऽपि त्रिविधः—शरीरेन्द्रियविषयभेदात् । तत्र शरीरमयोनिजं पिशाचादीनाम् । परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगक्षमत्वं जलादीनां प्राधान्याज्जलीयत्वादिकमिति । अत्र यो विशेषस्तमाह—देह-

(१) योऽयं रूपवद्द्रव्यासमवेतः स्पर्शः स क्वचिदाश्रितः, स्पर्शत्वात् पृथिवीसमवेतस्पर्शवद् । असति रूपवद्द्रव्याभिघाते योयं पर्णादिषु शब्दसंतानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः, अविभाज्यमानावयवद्रव्यसंबन्धिशब्दसंतानत्वात् दण्डाभिहतभेरीशब्दसंतानवत् । नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत् । रूपवद्द्रव्याभिघातमन्तरेण तृणे कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीयकर्मत्वात् नदपराहतकाशादिकर्मवदित्यनुमानानि बोध्यानि । (२) धृतिः-गुरुणो द्रव्यस्यापतनम् ।

व्यापीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् ॥ ४२ ॥ ४३ ॥

वायुं निरूपयति–अपाकजेति । पाकाज्जातः पाकजः न पाकजोऽपाकजः पृथिव्यामिव विजातीयतेजःसंयोगलक्षणेन पाकेन वायौ स्पर्शपरावृत्त्यदर्शनादपाकज एव स्पर्शोऽङ्गीक्रियत इति भावः । अनुष्णाशीतत्वांशस्तु प्रागेव व्याख्यातः । तथाचापाकजानुष्णाशीतस्पर्शवत्त्वं लक्षणम् । पृथिवीतेजोजलेष्वतिव्याप्तिवारणार्थं स्पर्शविशेषणानीति भावः ॥ ४२ ॥

तिर्यग्गमनवानिति । सदेति शेषः । स्वरूपकथनमात्रमिदं न तु लक्षणम्–अव्यावर्तकत्वात् । बहिरिन्द्रियजन्यप्रत्यक्षमात्रे रूपस्य कारणत्वात् वायौ च रूपाभावात्प्रत्यक्षं न संभवति अतोऽनुमानमेव प्रमाणमित्यभिप्रेत्याह–ज्ञेयः स्पर्शादिलिङ्गक इति । स्पर्श आदिर्यस्य शब्दस्य कम्पस्य धृतेश्च सः स्पर्शादिर्लिङ्गमनुमापकं यस्य स तादृश इत्यर्थः । शीतोष्णवर्षादिषु जलाग्न्यादेः सान्निध्यं विनोपलभ्यमानैर्विविधैः स्पर्शैः, दण्डाद्यभिघातं विना जायमानैः कीचकादिषु शब्दैः, हस्तादिव्यापारं विना जायमानैर्वृक्षादिकम्पनैः, अस्मदादिप्रयत्नं विना गगनगततृणानां विहङ्गमप्रभृतीनां धृतिभिश्चानुमीयते इति यावत् । अनुमानं च तादृशः स्पर्शः क्वचिदाश्रितः स्पर्शत्वात् सम्मतवत्, तादृशः शब्दः स्पर्शवद्द्रव्यहेतुकः शब्दत्वात्सम्मतवत्, तादृशः कम्पः स्पर्शवद्द्रव्यहेतुकः कम्पनत्वात्सम्मतवत्, तादृशी धृतिः स्पर्शवद्द्रव्यजन्या धृतित्वात्सम्मतवत् इत्यादि । अत्रेतरबाधाद्वायुसिद्धिः । पूर्ववदिति । तेजोवद्वायुर्द्विविधो–नित्योऽनित्यश्च । नित्यः परमाणुरूपः, अनित्यस्तदन्यः। सोपि त्रिविधः–शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेव वायुलोके प्रसिद्धम् । तत्र यो विशेषस्तमाह–देहव्यापीति । देहं व्याप्य स्थितं त्वगिन्द्रियं त्वचि सर्वत्र स्पर्शग्रहार्थं वर्तमानत्वात् त्वक्पदाभिधेयं वायवीयमिति शेषः । स्पर्शग्राहकमिन्द्रियं वायवीयेन्द्रियमिति यावत् । तस्य वायवीयत्वं तु रूपादिषु मध्ये स्पर्शस्यैव ग्राहकत्वाद्बोध्यम् ॥ ४३ ॥

विषयं दर्शयति–

**प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ।**

प्राणादिरिति। यद्यप्यनित्यो वायुश्चतुर्विधः तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे(१), तथापि सङ्क्षेपादत्र त्रैविध्यमुक्तम्। प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नानासंज्ञां लभत इति॥

विषयं दर्शयति–प्राणादिस्त्विति। प्राणः आदिर्यस्य अपानस्य समानस्योदानस्य व्यानप्रभृतेश्च स तथा महावाय्वन्तः स्पर्शादिमान् देहेन्द्रियभिन्नो वायवीयविषय इत्यर्थः। प्राणस्यैवाध्यात्मिकतया भोगप्रधानत्वात्प्रथमतो निर्देशः। स चैकोपि स्थानभेदादपानादिसंज्ञां भजते। तथाहि–

हृदि प्राणो गुदेऽपानः समानो नाभिदेशगः।
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः॥ इति॥

महान्वायुस्तु स्फुट एवेति सङ्क्षेपः।

एतेषां सृष्टिसंहारप्रकारस्तु प्रशस्तपादभाष्ये कथितः। तथाहि‘चतुर्युगसहस्रं तु ब्रह्मणो दिन मुच्यते’ इत्येवं गणनया शतवर्षजीविनो ब्रह्मणो मोक्षकालेऽविद्याकामकर्मधाराभिर्दुरन्तदुर्वारसंसारचक्रे परिभ्रमतां नद्यावर्तेषु कीटानामिवातिखिन्नानां प्राणिनां विश्रामार्थं परमकारुणिकस्य सकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षा भवति। अतस्तदानीमेव प्राणिकर्मणां फलोन्मुखत्वं गच्छति। ततस्तदानीमेव भगवदिच्छया सृष्ट्यारम्भकाः परमाणवः सचला भवन्ति। ततस्तेषां परस्परविभागे सत्यारम्भकसंयोगे नष्टे भुवनादिद्व्यणुकान्तस्य सर्वस्य नाशो भवति। ततः प्रविभक्ताः परमाणव एवावतिष्ठन्तो धर्माधर्मसंस्कारैर्युक्ताः जीवाश्च तावन्तमेव कालं निर्व्यापारा अवतिष्ठन्ते। ततः पुनरज्ञानिनां तेषां जीवानां धर्माधर्मादिभोगार्थं महेश्वरस्य सिसृक्षा भवति। ततः प्राणिकर्माणि फलोन्मुखानि भवन्ति। ततो भगवदिच्छया प्राणिकर्मभिश्च परमाणवः सृष्ट्युन्मुखा भवन्ति। ततः परमाणूनां परस्परसंयोगे द्वाभ्यां परमाणुभ्यां द्व्यणुकं त्रिभिर्द्व्यणुकैस्त्र्यणुकः त्रिभिस्त्र्यणुकैश्चतुरणुकमिति क्रमेण महान्वायुः समुत्पद्यते। ततस्तस्मिन्नेवाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पद्यते। तदनन्तरं पार्थिवेभ्यः परमाणुभ्यस्तेनैव क्रमेण महापृथिवी समुत्पद्यते। ततस्तस्मिन्नेवोदधौ तैजसेभ्योऽणु-

(१) प्रशस्तपादभाष्य इत्यर्थः।

भ्यस्तेनैव क्रमेण महान् तेजोराशिः समुत्पद्यते। एवं समुत्पन्नेषु महाभूतेषु चतुर्षु महेश्वराभिध्यानात्तैजसेभ्योऽणुभ्यः पार्थिवाणुसहितेभ्यो महदण्डमुत्पद्यते तस्मिन् चतुर्वदनं ब्रह्माणं सर्वभुवनसहितमुत्पाद्य प्रजासर्गे नियुंक्ते भगवान्महेश्वरः। स च महेश्वरेण नियुक्तोऽतिशयितज्ञानवैराग्यैश्वर्यसम्पन्नः सर्वप्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानभोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरूपादेभ्यश्चतुरो वर्णानन्यानि चोच्चावचानि सृष्ट्वा स्ववासनानुरूपधर्मज्ञानवैराग्यैश्वर्यैश्च योजयति। ततः प्राणिनः स्वस्वकर्मभक्तिज्ञानबलादैहिकामुष्मिकफलभाजो भवन्तीति सङ्क्षेपः।

आकाशं निरूपयति—

आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥

आकाशस्येति। आकाशकालदिशामेकैकव्यक्तित्वादाकाशत्वादिकं न जातिः, किन्तु आकाशत्वं शब्दाश्रयत्वम्। 'वैशेषिक' इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय। एतेन (१) प्रमाणमपि दर्शितम्। (२) तथाहि—शब्दो (विशेष)गुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत्—शब्दो द्रव्यसमवेतः गुणत्वात् (३) संयोगवत्—इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे, शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत्। पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम्। पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति। जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति। शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात् रूपवत्।

---

(१) तच्च शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादित्यनुमानरूपं बोध्यम्।

(२) उक्तानुमाने स्वरूपासिद्धिं परिहर्तुमाह—तथाहीत्यादिना। घटादौ व्यभिचारनिरासायायोग्येति। आत्मनि तन्निरासाय बहिरिन्द्रियग्राह्येति। रसत्वादौ व्यभिचारवारणाय जातिमदिति।

(३) अनेनानुमानेन द्रव्याश्रितत्वरूपविशेष्यासिद्धिः परिहृता। विशेषणासिद्धिश्च—शब्दो न स्पर्शवद्विशेषगुणः, न दिक्कालमनसां गुणः, नात्मविशेषगुण इत्याद्यनुमानत्रयेण। 'शब्दो विशेषगुण' इत्यादिना तु विशेष्यासिद्धिपरिहारकानुमाने हेतोरसिद्धिर्वारिता इति भावः।

नात्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वात् रूपवत् इत्यश्च शब्दाधिकरणं नवमं द्रव्यं गगननामकं सिध्यति। न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्, (१)अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् ॥ ४४ ॥

आकाशं निरूपयति आकाशस्येति। आकाशाख्यद्रव्यस्य शब्दः शब्दत्वजातिमान् वैशेषिकः स्वार्थे ठक् विशेषगुण इत्यर्थः। शब्दस्य श्रावणत्वेन पृथिव्यप्तेजोवायुमनआत्मकालादिष्वसंभवात् शब्दाश्रयत्वं आकाशस्य लक्षणमिति भावः। स्यादेतत् शब्दजनकतावच्छेदकं तत्र किमिति चेत्, शब्दवत्त्वमेवेति गृहाण। न च कार्यस्य कार्यात्पूर्वमभावात्कथं कार्यकारणतावच्छेदकावच्छिन्नस्य पूर्वमभावात्कार्योत्पाद इति वाच्यम् प्रकृते कारणतावच्छेदकावलीढस्यैव कार्योत्पादकत्वात्त। यद्वा आकाशस्य व्यापकत्वेन सर्वदेव शब्दस्य क्वचिज्जायमानत्वात्कारणतावच्छेदकावच्छिन्नसत्त्वस्य कार्योत्पादकत्वपक्षेऽपि क्षत्यभावादित्यास्तां विस्तरः ॥ ४४ ॥

तत्र च शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति—

इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः।

इन्द्रियमिति। नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं तु पुरुषभेदेन भिन्नं कथमाकाशं स्यादिति चेत्तत्राह— एकः सन्नपीत्यादि। आकाश एक एव सन्नपि उपाधेः कर्णशष्कुल्या भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः ॥

नित्यत्वेन निरवयत्वेन च तत्र शरीरविषययोरभावादिन्द्रियमाह—इन्द्रियमिति। श्रोत्रं-कर्णविवरसंज्ञकं नभः। ननु गगनमेकं श्रोत्रन्तु पुरुषभेदेन भिन्नं कथमाकाशं स्यात्तत्राह-एकः सन्नपीति। स्ववृत्तिद्रव्यविभाजकोपाधिमत्प्रतियोगिकभेदरहितोऽपि उपाधितः कर्णशष्कुलीरूपोपाधिभिः श्रोत्रं भवतीत्यर्थः। यद्यपि शब्दगुणेनानुमित आकाशो लाघवादेको नित्यश्च, तथापि कर्णशष्कुलीभेदाच्छ्रोत्रं पुरुषभेदेन भिन्नं भवतीति भावः॥ न चेश्वर एवाकाशोऽस्तु अलमतिरिक्ताकाशेनेति वाच्यम् जीवादिना विनिगमकाभावेनाति-

(१) स्वाश्रयनाशाजन्यनाशप्रतियोगि यावत् तद्भिन्नत्वेनेत्यर्थः।

दिक् इत्यन्यत्र विस्तरः ॥

कालं निरूपयति—

**जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥**

जन्यानामिति । तत्र प्रमाणं दर्शयितुमाह—जगतामिति । तथाहि—'इदानीं घटः' इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः । स च सम्बन्धः संयोगादिर्न संभवतीति(१) काल एव तत्संबन्धघटकः कल्प्यते । इत्थञ्च तस्याश्रयत्वमेव सम्यक् ॥ ४५ ॥

कालं निरूपयति—जन्यानामिति । जन्यानामुत्पत्तिमतां—घटादीनाम्, जनकः—निमित्तकारणम् । कुतोऽवधारितमिति चेत्, युगपज्जातश्चिरं जातः क्षिप्रं जातः इदानीं जातो दिने जातो रात्रौ जात इत्यादियौगपद्यप्रत्ययबलात् पुष्पफलादीनां वासन्तिकहैमन्तिकसंज्ञादिबलाच्चेत्यवेहि । नित्यानामपि कालसम्बन्धित्वाविशेषेऽनित्येष्वेव तादृशप्रत्ययस्य कालाधीनोत्पत्तिमन्निबन्धनत्वस्यावश्याभ्युपेयत्वात् । इत्थञ्च कालसिद्धिरपीति भावः । जगदाश्रयत्वप्रतीतिरपि काले मानमित्यभिप्रेत्याह—जगतामिति । सर्वेषां नित्यपदार्थानां आश्रयः कालिकसम्बन्धेनाधिकरणम् इदानीमिदमित्यादिप्रतीतेरित्यर्थः । सूर्यपरिस्पन्दादेरेवाश्रयत्वं प्रतीतिविषय इति, तु न युक्तं—सूर्यपरिस्पन्दघटयोः साक्षादसम्बद्धत्वात्, कालस्य सम्बन्धघटकत्वे तु कालस्यैव घटाद्याश्रयत्वौचित्यादिति दिक् ॥ ४५ ॥

प्रमाणान्तरं दर्शयति—

**परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।**

परापरत्वेति । परत्वापरत्वादिबुद्धेरसाधारणं निमित्तं काल एव, परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो(२) लाघवादतिरिक्तः काल एव क-

(१) इतीत्यनन्तरं स्वाश्रयतपनसंयोगिसंयोग एव सम्बन्धो वाच्यस्तत्रेति शेषः ।

(२) तथा च परत्वापरत्वे सासमवायिकारणके भावकार्यत्वात् इत्यनुमानेन तयोरसमवायिकारणद्रव्यावयवकत्वास्त च कालपिंडसंयोग एवेति तदाश्रयत्वेन कालसिद्धिरिति भावः ।

ल्प्यत इति भावः। नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह—क्षणादिरिति। कालस्त्वेकोऽपि उपाधिभेदात्क्षणादिव्यवहारविषयः। उपाधिस्तु (१)स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा। न चोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यम्, कर्मान्तरस्यापि सत्त्वादिति। महाप्रलये क्षणादिव्यवहारो यद्यस्ति, तदानायत्या ध्वंसेनोपपादनीय इति। दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति॥

लक्षणमाह—परापरत्वेति। परश्चापरश्च परापरौ तयोर्भावः परापरत्वम्। परत्वमपरत्वञ्च तद्धियो हेतुः तद्बुद्धेरसाधारणकारणमित्यर्थः। ज्येष्ठकनिष्ठादिनिष्ठपरत्वापरत्वज्ञानासाधारणकारणत्वम् कालस्य लक्षणमित्यर्थः। कथम् कारणत्वमिति चेत्, तत्र कारणीभूतबहुकालीनत्वज्ञानस्य कालनिबन्धनत्वादित्यवेहि। ननु कालस्यैकत्वात्क्षणादिव्यवहारः कथं स्यात्तत्राह—क्षणादिरिति। आदिना लवनिमेषकाष्ठाकलामुहूर्तादिपरिग्रहः। उपाधितः—स्ववृत्तिध्वंसप्रतियोग्यनाधारसमयवत्त्वरूपोपाधितः क्षणः, प्रतिक्षणं कस्यचिदुत्पत्तेः कस्यचिच्च नाशादेतद्बोध्यम्। क्षणद्वयं च लवः। एवमग्रेऽपीति संक्षेपः। तादृशक्रियोपाधिकः कालोऽपि क्षणादिपदवाच्यो भवतीत्यर्थः। नन्वीश्वर एव क्लृप्तस्तथाविधकालोऽङ्गीक्रियताम् अलमतिरिक्तकालेनेति चेन्न गगनादिना विनिगमकाभावेनातिरिक्तकालाङ्गीकारादित्याद्यन्यत्र विस्तरः॥

दिशं निरूपयति——

दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते॥ ४६॥

---

(१) यदा यत्र क्रिया जायते तद्द्वितीयक्षणे तयैव क्रियया वस्तुनः पूर्वदेशाद्विभागः, तदुत्तरक्षणे पूर्वसंयोगनाशः, ततः तयैव क्रिययोत्तरसंयोगः, ततः पञ्चमक्षणे तत्क्रियानाश इति नियमाद्द्वितीयक्षणे विभागस्यावश्यंभावात्तत्प्रागभाववैशिष्ट्यं तज्जनकक्रियायाः क्षणमात्रं सम्भवतीति तस्य प्रथमक्षणोपाधित्वम्। एवं तृतीयक्षणे पूर्वसंयोगनाशस्यावश्यंभावाद्विभागस्य द्वितीयक्षण एव पूर्वसंयोगविशिष्टत्वात्तादृशस्य तस्य द्वितीयक्षणोपाधित्वम्। एवं तृतीयचतुर्थयोरपि क्षणोपाधित्वं बोध्यम्।

दूरान्तिकेति । दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं बोध्यम् । तद्बुद्धेरसाधारणं बीजं दिगेव। दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया(१) लाघवादेका दिक् सिद्ध्यतीति भावः ॥ ४६ ॥

दिशं निरूपयति—दूरान्तिकेति। इदं दूरम् इदमन्तिकं समीपमिति धियोऽसाधारणं कारणमित्यर्थः। आदिना प्राचीप्रतीचीत्यादिपरिग्रहः। दूरत्वं चात्र दैशिकं परत्वम्, अन्तिकत्वं दैशिकमपरत्वम्। तथाच विप्रकृष्टसन्निकृष्टवृत्तिपरत्वापरत्वज्ञानासाधारणकारणकत्वं दिशो लक्षणमिति भावः। कथं कारणत्वमिति चेत्, तत्राकारणीभूतदूरतरदेशवर्तित्वसमीपतरदेशवर्तित्वज्ञानस्य दिङ्निबन्धनत्वादित्यवेहि।सा च लाघवादेका नित्या चेत्याह-एका नित्येति। एका-स्ववृत्तिद्रव्यविभाजकोपाधिमत्प्रतियोगिकभेदरहिता। नित्या-अनाद्यनन्ता ॥ ४६ ॥

ननु यद्येकैव दिक्, तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यत इत्यत आह—

उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।

उपाधिभेदादिति। यत्पुरुषस्य उदयगिरिसंनिहिता या दिक् सा तस्य प्राची, एवमुदयगिरिव्यवहिता या दिक् सा प्रतीची। एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची, तद्व्यवहिता त्ववाची— 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः' इति नियमात् ॥

ननु दिश एकत्वे प्राचीप्रतीचीत्यादिभिन्नव्यवहारः कथं? तत्राह-उपाधिभेदादिति। उपाधिश्चोदयाचलादिसान्निध्यादिस्तथाच तदपेक्षयोदयाचलसन्निहिता प्राची अस्ताचलसन्निहिता प्रतीची प्राच्याभिमुखपुरुषवामभागावच्छिन्ना दिगुदीची तादृशपुरुषदक्षिणभागावच्छिन्ना दिग्दक्षिणेत्यादिकं स्वयमूह्यम्। नन्वाकाशस्य परमेश्वरस्यैव वा दिगादिव्यवहारजनकतास्त्विति चेन्न विनिगमकाभावेनातिरिक्तदिश अङ्गीकारादित्यन्यत्र विस्तरः ॥

---

(१) अत्रापि पूर्ववदनुमानेनासमवायिकारणसंयोगाश्रयतया दिक्सिद्धिरूहनीया।

आत्मानं निरूपयति—

**आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७॥**

आत्मेन्द्रियाद्यधिष्ठातेति । आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति । ईश्वरेऽपि सा जातिरस्त्येव, अदृष्टादिरूपकारणाभावान्न सुखदुःखाद्युत्पत्तिः, (१)नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियम इत्यस्याप्रयोजकत्वात् । परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् न च दशमद्रव्यत्वापत्तिः, ज्ञानवत्त्वेन विभजनादित्याहुः । इन्द्रियाद्यधिष्ठाता—इन्द्रियाणां शरीरस्य च परम्परया(२) चैतन्यसंपादकः । यद्यप्यात्मनि 'अहं जाने अहं सुखी'त्यादिप्रत्यक्षविषयत्वमस्त्येव, तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति—करणमिति। कुठारादीनां छिदादिकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम् ,एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता (३) कल्प्यते ॥ ४७॥

आत्मानं निरूपयति—आत्मेति। आत्मा-जन्यज्ञानादिसमवायिकारणतावच्छेदकात्मपदप्रवृत्तिनिमित्तात्मत्वजातिमान् ज्ञानाद्याधिकरणम्, इन्द्रियाद्यधिष्ठाता—इन्द्रियादिप्रेरक इत्यर्थः। तत्र मानमाह—करणं हीति। हि यस्मात् करणं क्रियाया व्यापारवदसाधारणं कारणम् सकर्तृकं कर्तृप्रेर्यम्, तथा च श्रोत्रादीनि करणानि कर्तृप्रेर्याणि करणत्वात् वास्यादिवदित्यनुमानमात्मनि प्रमाणं लब्धम्। श्रोत्रादीनि त्वप्रत्यक्षाण्यपि प्रत्यक्षजनकत्वेनानुमीयन्त इति न पक्षासिद्धिरिति संक्षेपः॥ ४७॥

---

(१) ननु तर्हि कुतो नेश्वरे 'नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव' इति नियमात् सुखाद्युत्पत्तिरत आह नित्यस्येति । अप्रयोजकत्वादिति । अलपरमाणौ स्नेहाद्युत्पत्त्या तादृशनियमोऽप्रामाणिक इति भावः ।

(२) जनकतासम्बन्धेनावच्छेदकतासम्बन्धेन वेत्यर्थः ।

(३) चक्षुरादीनि सकर्तृकाणि करणत्वात्कुठारादिवदित्यनुमानेनेति भावः ।

ननु शरीरस्यैव कर्तृत्वमस्त्वत आह—

**शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।**
**तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥४८॥**

शरीरस्येति । (१)ननु चैतन्यं ज्ञानादिकमेव मुक्तात्मनां त्वन्मत एव मृतशरीराणामपि तदभावे का क्षतिः? प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेत्। न। शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थविरे स्मरणानुपपत्तेः, शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात् । न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उपपद्यत इति वाच्यम्, अनन्तसंस्कारकल्पने गौरवात् । (२)एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात् इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानीमिष्टसाधनतास्मारकाभावात् । मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः । न च जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम्, उद्बोधकाभावात्, अत्र त्वनायत्या(३) जीवनादृष्टमेवोद्बोधकं कल्प्यते । इत्थञ्च संसारस्यानादितया आत्मनोऽनादित्वसिद्धावनादिभावस्य नाशासम्भवान्नित्यत्वं सिद्ध्यतीति बोध्यम् ।

ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वं चास्तु विरोधे साधकाभावादत आह—तथात्वमिति । चैतन्यमित्यर्थः । उपघाते—नाशे सति, अर्थाच्चक्षुरादीनामेव । कथं स्मृतिः ? पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात्, अनुभवितुरभावात् । अन्येनानुभूतस्यान्येन स्मरणासम्भवात्, अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः ॥ ४८ ॥

ननु कर्तृत्वं ज्ञानचिकीर्षाकृतिमत्त्वम्, तच्च शरीरादिनिष्ठमेवा-

---

(१) शरीरात्मवादी बौद्धः शङ्कते नन्विति। त्वन्मत इवेति नैयायिकमते ज्ञानाभाव इवेत्यर्थः ।
(२) फलमुखगौरवस्याकिंचित्करत्वाद्दोषान्तरमाह एवमिति ।
(३) अगत्येत्यर्थः ।

स्तु गौरोऽहं जानामि करोमीत्यादिप्रतीत्या गौरवत्त्वज्ञानवत्त्वादीनां सामानाधिकरण्यग्रहादिति चार्वाकाशङ्कामपाकरोति-शरीरस्येति। शरीरस्य—शीर्यत इति विकारिणो देहस्य, न चैतन्यं—न ज्ञानादिकं घटादिवद्रूपादिमत्त्वाद्विनाशित्वाच्चेति भावः। कण्ठतो हेतुमाह—मृते चेति। शवावस्थायां ज्ञानस्यासम्भवात्, तथाच शब्दवत् यावद्द्रव्यभावित्वाज्ज्ञानादिकं न देहगुण इति भावः॥

ननु छिदिचलनादिक्रियाकरणानां कुठारादीनां ज्ञानवत्त्वबाधेपि ज्ञानकरणानामिन्द्रियाणां ज्ञानवत्त्वमस्तु करणत्वेन क्लृप्तानामाश्रयत्वमात्रकल्पने लाघवात्तत्राह—तथात्वञ्चेति। तथात्वं-ज्ञानवत्त्वम्, इन्द्रियाणां—ज्ञानकरणानां श्रोत्रादीनाम्, इदम् देहलीदीपिकान्यायेनोभयत्रान्वयि, चेत्-तर्हि इन्द्रियाणाम् उपघाते-नाशे सति कथं स्मृतिः न कथमपि भवेदित्यर्थः। स्मृतिस्तावदनुभवकार्या-अननुभूते स्मृतेरदर्शनात्, स चानुभवो यदि चक्षुराद्याश्रितस्तदा तेषु नष्टेषु पूर्वमनुभूतस्य घटादेः स घट इत्यादिस्मरणं न स्यात् अनुभवितुरभावादिति भावः॥ ४८॥

ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह—

**मनोपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्।**

मनोपीति। न तथा—न चेतनम्। ज्ञानाद्यनध्यक्षं तदा भवेत् मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तेरित्यर्थः। यथा च मनसोऽणुत्वं तथा वक्ष्यते॥

(१)नन्वस्तु विज्ञानमेवात्मा, तस्य स्वतःप्रकाशरूपत्वाच्चेतनत्वम्। ज्ञानसुखादिकं तु तस्यैवाकारविशेषः। तस्यापि भावत्वादेव क्षणिकत्वम्। पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञाने हेतुत्वात्सुषुप्तावप्यालय-

---

(१) क्षणिकविज्ञानात्मवादी बौद्धः शङ्कते नन्विति। आत्मनिरूपणस्य प्रस्तुतत्वादात्मेत्युक्तं, वस्तुमात्रस्यैव तन्मते विज्ञानरूपत्वादिति बोध्यम्। अत्र विज्ञानत्वं प्रमेयत्वस्य व्यापकं न वेति विप्रतिपत्तिः। तत्र विधिकोटिर्योगाचारस्य निषेधकोटिर्नैयायिकस्येति बोध्यम्। द्विविधं विज्ञानं—प्रवृत्तिविज्ञानमालयविज्ञानं चेति। तत्र 'अयं घटः' इत्यादि प्रवृत्तिविज्ञानं 'अहम् जानामि' इत्याकारकमालयविज्ञानम्। तदेवात्मेति भावः।

विज्ञानधारा निराबाधैव, मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेत् । न । तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः, यत्किञ्चिद्विषयकत्वे विनिगमनाविरहः, सुषुप्तावपि विषयावभासप्रसङ्गाच्च, ज्ञानस्य सविषयत्वात् । तदानीं निराकारा चित्सन्ततिरनुवर्तत इति चेत् । न । तस्याः स्वप्रकाशत्वे(१) प्रमाणाभावात्, अन्यथा घटादीनामपि ज्ञानत्वापत्तिः । न चेष्टापत्तिः—विज्ञानव्यतिरिक्तवस्तुनोऽभावदिति वाच्यम्, घटादेरनुभूयमानस्यापलपितुमशक्यत्वात् । आकारविशेष एवायं विज्ञानस्येति चेत् ? किमयमाकारोऽतिरिच्यते विज्ञानात्, तर्हि समायातं विज्ञानव्यतिरिक्तेन । नातिरिच्यते चेत्, तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः (२)स्यात्—स्वरूपतो(३) विज्ञानस्याविशेषात् । (४)अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेत् । न । नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात्, इतरथा विरोधावधारणस्यैव दुरुपपादत्वात् । न वा वासनासंक्रमः सम्भवति, मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात् । न चोपादानोपादेयभावो नियामक इति वाच्यम्, वासनायाः संक्रमासम्भवात् । उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेत् । न । तदुत्पादकाभावात् । चित्तामेवोत्पादकत्वे तदानन्त्यप्रसङ्गः । क्षणिकविज्ञानेऽतिशयविशेषः कल्प्यत इति चेत् । न । मानाभावात्कल्पनागौरवाच्च । एतेन क्षणिकशरीरेष्वेव चैतन्यं प्रत्युक्तं, गौरवादतिशये मानाभावाच्च । बीजादावपि सहकारिसमवधा-

---

(१) स्वप्रकाशत्वे—ज्ञानत्वे ।

(२) स्यादिति । तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायादिति भावः ।

(३) विज्ञानस्वरूपस्यैकत्वादित्यर्थः ।

(४) ननु नीलः पीतश्चाभिन्न एव भेदप्रतीतिस्तु नीलत्वादितत्तद्धर्ममादाय बोध्या अपारमार्थिकस्य नीलत्वादेर्विज्ञानस्वरूपत्वेपि पारमार्थिकनीलादिविज्ञानाभेदस्यासम्भवादित्यामिप्रायवानाशङ्कते—अपोहरूपइति । अनीलव्यावृत्तिरूप इत्यर्थः

नासमवधानाऽस्यामेवोपपत्तेः (१)कुर्वद्रूपत्वाकल्पनाच्च ॥

(२)अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा 'अविनाशी वा अरेऽयमात्मा, सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतेरिति चेत् । न । तस्य सविषयकत्वासम्भवस्य दर्शितत्वान्निर्विषयस्य ज्ञानत्वे मानाभावात्सविषयकत्वस्याप्यननुभवात्, अतो विज्ञानादिभिन्नो नित्य आत्मेति सिद्धम् । (३)'सत्यं ज्ञानमिति' तु ब्रह्मपरं, जीवे तु नोपयुज्यते । (४)ज्ञानाज्ञानसुखित्वदुःखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः, अन्यथा बन्धमोक्षव्यवस्थानुपपत्तेः । योऽपीश्वराभेदबोधको वेदः, सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन्स्तौति, अभेदभावनयैव च यतितव्यमिति वदति । अत एव 'सर्वे आत्मानः समर्पिता' इति श्रूयते । मोक्षदशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न, भेदस्य नित्यत्वेन नाशासम्भवात् भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव । न च द्वित्वमपि नश्यतीति वाच्यम्, तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवत् द्वित्वाभावेपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात् । मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेत्, एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमप्युच्यताम्, प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात् । योऽपि तदानीमभेदप्रतिपादको वेदः, सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति--संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत, अत एव 'निरञ्जनः परमं साम्यमुपैति' इति श्रूयते । (५)ईश्वरो

---

(१) कुर्वद्रूपं अंकुरजनकतावच्छेदकरूपमित्यर्थः ।

(२) नित्यविज्ञानस्वरूपात्मवादी वेदान्ती आक्षिपति —अस्त्विति ।

(३) ननु सत्यं ज्ञानमिति श्रुतिरेव जीवस्य ज्ञानरूपत्वे प्रमाणमत आह सत्यमिति ।

(४) ननु जीवब्रह्मणोरैक्यान्नित्यविज्ञानस्वरूपत्वं जीवस्य निराबाधमित्यतो जीवब्रह्मणोर्भेदं साधयति ज्ञानेति ।

(५) जीवस्य विज्ञानरूपतां निरस्येश्वरस्यापि तां निरस्यति ईश्वरोपि नेति ।

ऽपि न ज्ञानसुखात्मा, किन्तु ज्ञानाद्याश्रयः 'नित्यं विज्ञानमानन्दं ब्रह्म' इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः—'यः सर्वज्ञः स सर्ववित्' इत्याद्यनुरोधात्। आनन्दमित्यस्याप्यानन्दवदित्यर्थः—अर्शआदित्वान्मत्वर्थीयाच्प्रत्ययात्, अन्यथा पुल्लिङ्गत्वापत्तेः। 'आनन्दोऽपि दुःखाभावे उपचर्यते—भाराद्यपगमे सुखी संवृत्तोऽहमितिवत् दुःखाभावेन सुखित्वप्रत्ययात्। अस्तु वा तस्मिन्नानन्दो न त्वसावानन्दः—'असुखम्' इति श्रुतेः। न विद्यते सुखं यस्येति कुतो नार्थ इति चेत्। न। (१)क्लिष्टकल्पनापत्तेः, प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्प्रत्ययविरोधा( त् 'आनन्दं ब्रह्मणो विद्वान्, इत्यत्र भेदस्य स्पष्टत्वा)च्चेति संक्षेपः॥

(२)एतेन—'प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः, किन्तु चेतनः। कार्यकारणयोरभेदात कार्यनाशे सति कार्यरूपतया तन्नाशो न स्यादित्यकारणत्वं तस्य, बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम्। बुद्धिश्च प्रकृतेः परिणामः, सैव महत्तत्त्वमन्तःकरणमित्युच्यते। तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ। तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः। पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्। ममेदं कर्तव्यमिति मदंशः पुरुषोपरागः, बुद्धेः स्वच्छतया चेतनप्रतिविम्बादतात्त्विकः, दर्पणस्येव मुखोपरागः। इदमिति विषयोपराग इन्द्रियप्रणालिकया(३) परिणतिभेदस्तात्त्विकः, निःश्वासाभिहतदर्पणस्येव मलिनिमा। कर्तव्यमिति व्यापारांशः। तेनांशत्रयवती बुद्धिः। तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धः, दर्पणस्य मलिनिम्नेव मुखस्य—

(१) बहुव्रीहौ अन्यपदार्थलाभाय नञो लक्षणापत्तेरित्यर्थः।

(२) सांख्यमतं दूषयितुं तन्मतमाह एतेनेति।

(३) इन्द्रियद्वारेत्यर्थः। परिणतिभेदः अयं घट इत्यादिज्ञानरूपपरिणामविशेषः विषयेण घटादिना बुद्धेः सम्बन्ध इत्यर्थः।

उपलब्धिरुच्यते । ज्ञानादिवत्सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बु-द्धेरेव–कृतिसामानाधिकरण्येन प्रतीतेः । न च बुद्धिश्चेतना परिणा-मित्वात्' इति मतमपास्तम्—कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च । चेतनोऽहं करोमीति प्रतीतिश्चैतन्यांशे भ्रम इति चेत्, कृत्यंशेऽपि किं नेष्यते ? अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्वमसंसारापत्तिः । नन्वचेतनायाः प्रकृतेः कार्यत्वाद्बुद्धेरचैतन्यं कार्यकारणयोस्तादात्म्यादिति चेत् । न । (१)असिद्धेः—कर्तुर्जन्यत्वे (२)मानाभावात्, वीतरागजन्मादर्शना-दनादित्वम्, अनादिभावस्य नाशासम्भवान्नित्यत्वम् । तत्किं प्रकृ-त्यादिकल्पनेन । न च—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥

इत्यनेन विरोध इति वाच्यम्, प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैरि-च्छादिभिः कर्ताहमिति–कर्ताऽहमेवेत्यस्य तदर्थत्वात् ।

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।

इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति संक्षेपः ।

मास्तु बाह्येन्द्रियाणामात्मत्वं मनसस्तु स्यात् नित्यत्वेन त-द्दोषराहित्यात्सङ्कल्पयामीत्यादिप्रतीतेश्चेत्यत आह–मनोपि न तथेति । मनः–सुखाद्युपलब्धिकरणं, न तथा–न चेतनम् करणत्वेनैव चेतन-त्वासम्भवादिति भावः । तत्र युक्त्यन्तरमाह—ज्ञानाद्यनध्यक्षमिति । व्यासङ्गाद्युपपादनाय ज्ञानमात्रकरणत्वेनावश्यक्लृप्तस्य मनसो धर्मि-ग्राहकमानादेवाणोर्यदि कर्तृत्वं लाघवादिति तर्काज्ज्ञातृत्वं तदा त-त्समवेतज्ञानादेरनध्यक्षं परमाणुगुणानामिवाप्रत्यक्षं स्यात् गुणलौ-किकप्रत्यक्षे सामानाधिकरण्येन हेतोर्महत्त्वस्यात्राभावात् ॥

(१) असिद्धेरिति । बुद्धेः प्रकृतिकार्यत्वस्येति भावः ।

(२) कर्तृत्वेन जन्यत्वानुमितौ अनुकूलतर्को नास्तीत्यर्थः । वीतरागेति । सरागजन्मदर्शनादना-दित्वमात्मन इति भावः ।

(१)प्राणोऽप्यात्मा न भवति ज्ञानाभावात्सुषुप्तिषु ॥
चैतन्ये तस्य तत्रैव खपुष्पं व्यापृतिर्भवेत् ॥ १ ॥

मास्तु मनस आत्मत्वं प्राणस्य तु स्यादेव—श्वसामि जीवामि क्षुधितोऽस्मि पिपासित इत्यादिप्रतीतेः, करणोपरमेऽपि सुषुप्त्यादौ जीवनहेतुत्वाच्च तत्राह–प्राणोपीति । प्राण आत्मा न भवति स्वसत्तायां चैतन्यव्यभिचारादित्यर्थः । सुषुप्तौ चैतन्याभावं प्राणस्य साधयति–चैतन्येति । तस्य प्राणस्य चैतन्ये चेतनत्वेऽङ्गीकृते तत्र सुषुप्तौ करणोपरमावस्थायां व्यापृतिः खपुष्पं स्यात् जीवनादिव्यापारोऽलीकः स्यात् विश्रामावस्थारूपायां तस्यां चैतन्योपरमेण व्यापारासम्भवात्, चेतनस्य तस्य व्यापारवत्त्वे तु सुषुप्तत्वव्याघातप्रसङ्गात्, करणव्यापारोपरमादिति चेत्, न–चेतने तस्मिन्सव्यापारे तदायत्तव्यापाराणां करणानामुपरमायोगात् न हि सम्राजि समरोद्युक्ते सैनिकानामविरामो दृश्यते । तस्मान्न प्राणश्चेतनो न वा करणाधिपतिः, किन्त्वन्य एव चेतनः करणाधिपतिश्च, तद्विरामेणैव सर्वेषां विरामात्, प्राणस्य तु न विरामो जीवनादृष्टेन प्रतिबन्धात् । तस्मात्सिद्धं देहेन्द्रियमनःप्राणेभ्यो भिन्न आत्मेति ॥ १ ॥

धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥

धर्माधर्माश्रय इति । आत्मेत्यनुषज्यते । शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरेण भोगानुपपत्तेः । विशेषगुणयोगत इति । योग्यविशेषगुणस्य ज्ञानसुखादेः सम्बन्धेनात्मनः प्रत्यक्षत्वं सम्भवति,न त्वन्यथा—अहं जाने अहं करोमीत्यादिप्रतीतेः ॥ ४९ ॥

धर्माधर्माश्रयत्वादपि स तादृश इत्यभिप्रेत्याह–धर्माधर्मेति । आत्मेत्यनुषज्यते, धर्माधर्मयोः पुण्यपापयोः समवायेनाधिकरणमात्मेत्यर्थः । देहेन्द्रियादीनां तदाश्रयत्वे तु देहान्तरादिकृतकर्मणां देहान्तरे भोगो न स्यात्कर्त्तुर्नाशात् । यद्यपि मनसि नायं दोषो नित्यत्वात्, तथापि मनसो मूर्तत्वादिहेतुभिरचेतनत्वेन भोक्तृत्वासम्भ-

(१) इयं कारिका चन्द्रिकाकारेणोपक्षिप्तेति प्रतिभाति क्वापि कारिकावल्यां तदनुपलम्भान्मुक्तावल्याम्प्रतीकानवधारणाच्च ।

वे तात्पर्यम् । तस्मादात्मैव धर्माधर्माश्रय इति सिद्धम् ॥ स्वप्रकाशोपि न भवति विशेषगुणसम्बन्धं विनाऽभावादित्यभिप्रेत्याह-अध्यक्षेति । विशेषगुणयोगतः-योग्या ये ज्ञानादयो विशेषगुणास्तेषां योगतः सम्बन्धेन अध्यक्षः-अहम् जानामि इच्छामि करोमि सुखी दुःखीत्यादिप्रत्यक्षविषय इत्यर्थः । वस्तुतोऽत्र विशेषगुणपुरस्कारेणैवात्माध्यक्ष इति नियमो नार्थः किन्तु रूपयोगेन घटादिवत् ज्ञानादिगुणयोगेनैवाध्यक्ष इति, तेनाहमास्मि मामहं जानामीत्यादेरञ्जसा निर्वाह इति रहस्यम् ॥ ४९ ॥

प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।
अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥

प्रवृत्त्येति । अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते । प्रवृत्तिरत्र चेष्टा । ज्ञानेच्छाप्रयत्नादीनां देहेऽभावस्यो(१)क्तप्रायत्वाच्चेष्टया प्रयत्नवानात्माप्यनुमीयत(२) इति भावः । अत्र दृष्टान्तमाह-रथेति । (३)यद्यपि रथकर्म चेष्टा न भवति, तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परात्मापीति भावः ।

अहङ्कारस्येति । अहङ्कारोऽहमितिप्रत्ययस्तस्याश्रयो विषयः आत्मा न शरीरादिरिति । मन इति । मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः । रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥५०॥

धर्माधर्माश्रयत्वस्य चागमप्रामाण्यग्रहं विना दुर्ग्रहत्वाविशेषादनुमानमाह-प्रवृत्तीति । जातमात्रस्य स्तन्यपानगोचरचेष्टानुमितप्रवृत्त्यादिनाऽनुमेय इत्यर्थः। आदिना हर्षभयशोकादिपरिग्रहः। तथाहि-प्रवृत्त्यादिकं प्रतीष्टसाधनताज्ञानादिकं कारणं तथैवान्वयव्यतिरेकात् । इत्थं चैतज्जन्मनि तथाननुभूतेषु पूर्वानुभवाधीनस्मृतित एव तत्सम्भवात्पूर्वपूर्वसिद्धौ तस्यानादिभावस्य तु न नाश इति नित्यत्वे सति ज्ञानवत्त्वादेहेन्द्रियमनोभिन्नत्वेन सिद्धिरित्यर्थः । एवं

(१) शरीरस्य न चैतन्यमिति कारिकायामिति भावः ।
(२) शरीरं चेतनमधिष्ठितं चेष्टावत्त्वाद्रथवदित्युमानप्रयोगः ।
(३) दृष्टान्तासिद्धिमाशंक्य निरस्यति यद्यपीति ।

परदेहादावपि अयमात्मावान् चेष्टानुमितप्रवृत्तिमत्त्वादित्यनुमेय इत्यर्थः। तत्र दृष्टान्तः—रथगत्येति। रथकर्मणा सारथिर्यथानुमीयते तद्वदित्यर्थः॥

अहमितिधीविषयत्वादप्यात्मा देहादिभ्यो भिन्न इत्याह—अहङ्कारस्येति। अहङ्कारोऽहमितिप्रत्ययस्तस्याश्रयो विषय इत्यर्थः। स एव कुतो विषयस्तत्राह—मनोमात्रस्येति। मन एव मनोमात्रं तस्य गोचरो ग्राह्य इत्यर्थः—बहिरिन्द्रियव्यापारमन्तरेणापि मनसा जायमानमानसप्रत्यक्षविषय इति यावत्। शरीरादेर्विषयत्वेऽहंप्रत्ययस्य मानसत्वं न स्यात् किन्तु बहिरिन्द्रियादिजन्यत्वमेव शरीरादेरमानसत्वात् तस्मादात्मैव विषयो, मोक्षजनकमपि ज्ञानं देहादिभिन्नत्वेनात्मनो नाहं गौर इत्याद्याकारं भावनाविशेषसहकृतेन मनसैव—भवति 'मनसैवानुद्रष्टव्यामेति' श्रुतेरिति भावः॥५०॥

विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तु द्विविधा मता।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा॥ ५१॥

विभुरिति। विभुत्वं परममहत्त्वम्। तच्च पूर्वोक्तमपि स्पष्टार्थमुक्तम्। बुद्ध्यादीति। बुद्धिसुखदुःखेच्छादिचतुर्दशगुणाः पूर्वोक्ता वेदितव्याः।

अत्रैव प्रसङ्गाद्बुद्धेः कतिपयं प्रपञ्चं दर्शयति—बुद्धिस्त्विति।

द्वैविध्यं व्युत्पादयति—अनुभूतिरिति। अनुभूतिश्चतुर्विधेति। एतासां चतसृणां करणानि चत्वारि 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति गौ. १। १। ३ सूत्रोक्तानि वेदितव्यानि॥ ५१॥

"महतो महीयान् ज्यायानाकाशात्" इत्यादिश्रुतेर्नित्यनिरातिशयव्यापकत्वादपि देहादिभ्यो भिन्न आत्मेत्याह—विभुरिति। व्यापक इत्यर्थः। अणुत्वे गङ्गायां निमग्नस्य युगपत्सर्वाङ्गीणशैत्योपलम्भाभावप्रसङ्गात्, मध्यमत्वे चैकस्यात्मनः क्रमेण मशकमतङ्गमनुजशरीरप्राप्तावयवोपचयापचयस्यावश्यवक्तव्यत्वादनित्यत्वप्राप्त्या कृतहानाकृताभ्यागमप्रसङ्गात्, 'आकाशवत्सर्वगतश्च नित्य' इति श्रुतेश्च नित्यो विभुरेवात्मा नाणुर्न वा मध्यम इति भावः। न च जीवानां विभुत्वे सर्वदेहसान्निध्याद्भोगसाङ्कर्यप्रसङ्ग इति वाच्यम्, तत्तदात्मम-

नसामनादिस्वस्वामिसम्बन्धबलतो व्यवस्थायाः सम्भवेन भोगसा-ङ्कर्याभावादित्यन्यत्र विस्तरः। जानामीत्यादिप्रतीतेश्च ज्ञानादिगुणक एव सः न तु ज्ञानरूपोपीत्याशयेनाह-बुद्ध्यादिगुणवानिति। आदिप-दादिच्छादिपरिग्रहः।

बुद्धिं व्युत्पादयति—बुद्धिस्त्विति। जानामीत्यनुव्यवसायगम्य-ज्ञानत्वजातिमान् गुणो बुद्धिर्द्विप्रकारेत्यर्थः।

तदेव दर्शयति-अनुभूतीति। अनुभवामीतिप्रत्ययासिद्धोऽनुभवत्व-जातिमान् प्रत्ययोऽनुभवः प्रमाणहेतुको वा, संस्कारमात्रजन्यं ज्ञानं स्मृतिरनयोर्भेदादित्यर्थः। तत्रानुभवं विभजते-अनुभूतिश्चतुर्विधेति॥५१॥

प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे।

प्रत्यक्षमिति। इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। यद्यपि मनोरूपेन्द्रि-यजन्यं सर्वमेव ज्ञानं तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने करण-त्वं तत्प्रत्यक्षमिति विवक्षितम्। ईश्वरप्रत्यक्षं तु न लक्ष्यम्-(१)'इन्द्रिया-र्थसांनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' इति १।१ ४ सूत्रे तथैवोक्तत्वात्। (२)अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य कारणत्वात्तत्र तत्र नातिव्याप्तिः। इदं लक्षणमीश्वरप्र-त्यक्षसाधारणम्।

परामर्शजन्यं ज्ञानमनुमितिः। यद्यपि परामर्शप्रत्यक्षादिकं परामर्श-जन्यं तथापि परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तदेवानुमितिः। न च कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम्, (३)तादृशज्ञानत्वं-

---

(१) ननु तस्यैव लक्ष्यत्वे किं मानमत आहेन्द्रियार्थेति अत्र सूत्रे इन्द्रियार्थसन्निकर्षो-त्पन्नमव्यभिचारिज्ञानमव्यपदेश्यं व्यवसायात्मकमिति योजना। अन्यथा लक्षणवाक्ये विभागबोध-कपदेन व्यवधानादसङ्गतेः। अत्र ज्ञानान्तं प्रत्यक्षप्रमाया लक्षणम्। अवशिष्टो विभागः। भ्रम-भिन्नम् अव्यभिचारि। व्यपदेशः शब्दप्रयोगः स च विशिष्टज्ञानादेवेत्यव्यपदेश्यत्वेन व्यपदेशानर्ह-त्वेन निर्विकल्पकलाभः। व्यवसायात्मकमिति। विशिष्टज्ञानात्मकं सविकल्पकमित्यर्थः।

(२) ईश्वरप्रत्यक्षस्यापि लक्ष्यत्वाभिप्रायेणाहाथवेति। (३) कथितनिश्चयजन्यहेत्वविषयकेत्यर्थः।

त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । (१)अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः । एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः । पदज्ञानकरणकं ज्ञानं शाब्दबोधः । वस्तुतो यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तित्वे सति यां कांचित् प्रत्यक्षव्यक्तिमादाय तदवृत्तिजातिमत्त्वमनुमितित्वम् । एवं यत्किञ्चित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति ।

तदेव दर्शयति–प्रत्यक्षमित्यादि । प्रत्यक्षं–साक्षात्करोमीति प्रत्ययवेद्यसाक्षात्कारत्वजातिमान् प्रत्ययः । अनुमितिः–अनुमिनोमीत्यनुभवसिद्धानुमितित्वजातिमान् प्रत्ययः । उपमितिः–उपमिनोमीत्यनुभवसिद्धोपमितित्वजातिमान् प्रत्ययः । शब्दजो–शब्दयामीत्यनुभवसिद्धः शाब्दत्वजातिमान् प्रत्ययः । एतेषां भेदाच्चतुःप्रकारेत्यर्थः ।

(२)इन्द्रियं करणं तत्र प्रत्यक्षे षड्विधेऽपि च ॥

तत्र प्रत्यक्षं व्युत्पादयति–इन्द्रियमिति । तत्र तेषु चतुर्विधानुभवेषु मध्ये प्रत्यक्षे कथितलक्षणे न केवलं कस्मिंश्चित् अपि त्वनुपदमेव वक्ष्यमाणे षड्विधेपि इन्द्रियं प्रत्यक्षजनकतावच्छेदकेन्द्रियत्वनामकाखण्डोपाधिमज्ज्ञानकरणमतीन्द्रियं चक्षुरादि करणं व्यापारवदसाधारणं करणम् । तथाचेन्द्रियजन्यज्ञानत्वमित्यपि प्रत्यक्षलक्षणं प्राप्तम् । न च ज्ञानमात्रस्य मनोरूपेन्द्रियजन्यत्वादनुमित्यादावतिव्याप्तमिति शङ्क्यम्, विषयतयेन्द्रियजन्यत्वस्य विवक्षितत्वात् ।

घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥

जन्यप्रत्यक्षं विभजते—घ्राणजादीति । घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम् । न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वं जन्यप्रत्यक्षस्यैव निरूपणीयत्वादुक्तसूत्रानुसारात् ॥ ५२॥

---

(१) पक्षधर्मतायाः अप्रवेशेन लाघवात् लक्षणान्तरमाह–अथवेति । नन्वनुमितिं प्रत्यपि न व्याप्तिज्ञानत्वेन करणत्वं किन्तु ज्ञानत्वेन मनस्त्वेनैव वा, एवमेवोपमित्यादावपि मनस्त्वेनैव करणत्वम्, कार्यवैलक्षण्यस्य सामग्रीवैलक्षण्यादेवोपपत्तेः. प्रमाणविभागस्तु विजातीयप्रमाप्रयुक्तश्चास्यादित्युक्तानुमित्यादिलक्षणानामसम्भव इत्यत आह—वस्तुत इति ।

(२) इदं कारिकार्धमर्थसङ्गत्यर्थं चन्द्रिकाकारेण प्रक्षिप्तम् ।

षड्विधं दर्शयति–घ्राणजादीति। घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रावणं मानसमिति भेदेन षट्प्रकारमित्यर्थः ॥ ५२ ॥

घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥

घ्राणस्येति । गोचर इति—ग्राह्य इत्यर्थः । गन्धत्वादिरिति,–आदिपदात् सुरभित्वासुरभित्वपरिग्रहः । गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा । गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यम् । तथा रस इति । रसत्वादिसहित इत्यर्थः । तथा शब्दोऽपि–शब्दत्वादिसहितः । गन्धो रसश्च उद्भूतो बोध्यः ॥ ५३ ॥

तत्र घ्राणजं व्युत्पादयति–घ्राणस्येति। गोचरो–ग्राह्यः। गन्धत्वादिरित्यादिपदात्सौरभत्वादिपरिग्रहः। तथा रस इति। रसत्वजातिसहित इत्यर्थः। तथा शब्दोपि चेति। शब्दत्वजातिसहित इत्यर्थः। श्रुतेः-श्रोत्रेन्द्रियस्य। गन्धो रसश्चोद्भूतो बोध्यः-अनुद्भूतस्याप्रत्यक्षत्वात्। न चानुद्भूते मानाभावः, पृथिवीत्वादिना घ्राणादौ गन्धानुमानेन परिशेषात्तत्सिद्धिः॥ ५३ ॥

उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।
विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥
क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ।

उद्भूतरूपमिति। ग्रीष्मोष्मादावनुद्भूतरूपमिति न तत्प्रत्यक्षम्। तद्वन्ति––उद्भूतरूपवन्ति। योग्येति। पृथक्त्वादिकमपि योग्यव्यक्तिवृत्ति(तया) बोध्यम्। तादृशः योग्यव्यक्तिवृत्तिरित्यर्थः॥

गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥

चक्षुर्योग्यत्वमेव कथं तदाह—गृह्णातीति। आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम्। तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसंबन्धेन कारणत्वम्, द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसम-

वायसंबन्धेन, द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेत-समवायसंबन्धेनेति ॥ ५४ ॥ ५५ ॥

नयनजं व्युत्पादयति–उद्भूतरूपमिति। उद्भूतत्वं न जातिः शुक्ल-त्वादिना सङ्करात्, किन्तु शुक्लत्वादिव्याप्यानुद्भूतत्वाभावकूटवत्त्वम्। उद्भूतत्वमेव तथाविधम् नानास्त्विति, तु न युक्तम्–बहिर्द्रव्यप्रत्यक्ष-त्वावच्छिन्ने कारणतावच्छेदककोटिप्रविष्टतयाऽनुगतोद्भूतत्वस्या-पेक्षणादित्यन्यत्र विस्तरः। रूपं रूपत्वविशिष्टं चक्षुषो ग्राह्यमित्य-र्थः। अत्र यो विशेषस्तमाह–द्रव्याणीति। तद्वन्ति–उद्भूतरूपवन्ति। गोचर इत्यनुवर्तते। अनेन पिशाचादिव्यावृत्तिः उद्भूतरूपवत्त्वाभा-वात्। गुणान्तरमपि योग्यमात्रवृत्ति योग्यमित्याह–पृथक्त्वेत्यादि परिमाणयुक्तमित्तेन ॥ ५४ ॥

क्रिया–उत्क्षेपणादिकर्म जातिः–द्रव्यत्वरूपत्वादिः–योग्यवृत्तिः यो-ग्यव्यक्तिगतेत्यर्थः। समवायश्च तादृशः–योग्यव्यक्तिवृतिः–प्रत्यक्ष इत्यर्थः। इदन्तु नैय्यायिकमतमाश्रित्य, वैशेषिकनये घटाकाशसंयो-गादेरिव समवायस्याप्रत्यक्षत्वादिति सङ्क्षेपः। नन्वेवमन्धकारे घटा-दिप्रत्यक्षं न कुतस्तत्राह–गृह्णातीति। आलोकपदमत्र महदनभि-भूतोद्भूतरूपवदालोकार्थकं तथाच महदनभिभूतोद्भूतरूपवदालोक-संयोगश्चक्षुषो द्रव्यग्रहे सहकारिकारणं न चान्धकारे सोऽस्ति त-स्मान्न प्रत्यक्षम्। न च महदुद्भूतेति व्यर्थं–तेजःपरमाणुचक्षुःसंयोग-योः सत्त्वात्। अनभिभूतेत्यनेनान्धकारे सुवर्णप्रत्यक्षनिरासः–स्व-र्णस्याभिभूतरूपवत्त्वात्। नन्वेवं तेजोन्तरप्रत्यक्षं कथं तेजःसंयो-गाभावादिति चेन्न आलोकाकाशसंयोगेन तत्प्रत्यक्षसम्भवादित्या-स्तां विस्तरः। एवं उद्भूतरूपवत्त्वे घटादेः प्रत्यक्षात् तादृश-रूपाभाववत्त्वे पिशाचादेरप्रत्यक्षादन्वयव्यतिरेकाभ्यां प्रत्यक्षविषय-वृत्तिरूपमपि सहकारिकारणं बोध्यम् ॥ ५५ ॥

उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥

द्रव्याध्यक्षे—

उद्भूतेति। उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः। सोऽपि–उद्भूत-

स्पर्शोऽपि, स्पर्शत्वादिसहितः। रूपान्यदिति। रूपभिन्नं रूपत्वादिभिन्नं यच्चक्षुषो योग्यं तत्त्वगिन्द्रियस्यापि ग्राह्यम्। तथाच पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रियाजा(तिप्रभृ)तयो योग्यवृत्तयश्च ते त्वचो ग्राह्या इत्यर्थः। अत्रापि-त्वगिन्द्रियजन्यंऽपि द्रव्यप्रत्यक्षे रूपं कारणम्। तथाच बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्।

नवीनास्तु बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपं कारणं प्रमाणाभावात्, किन्तु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणमन्वयव्यतिरेकात्। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेत्, न किञ्चित्। आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु। रूपस्य कारणत्वे लाघवमिति चेत्। न। वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात्। इष्टापत्तिरिति चेत्, उद्भूतस्पर्श एव लाघवात्कारणमस्तु। प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरेव किं नेष्यते? तस्मात् प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्यक्षस्य संभवाद्वायोरपि प्रत्यक्षं संभवत्येव। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपस्य न वा स्पर्शस्य हेतुत्वम्। (१)वायुप्रभयोरेकत्वं गृह्यत एव। क्वचिद्द्वित्वादिकमपि(२)। क्वचित्संख्यापरिमाणाद्यग्रहो (३)दोषादित्याहुः ॥ ५६ ॥

त्वगिन्द्रियस्यापि नयनस्येव द्रव्यं विषयः किं? तत्राह—उद्भूतस्पर्शवदिति। त्वचः-त्वगिन्द्रियस्य। उद्भूतस्पर्शवदित्यत्राप्युद्भूतपदं पूर्ववत्। सोपि च-उद्भूतस्पर्शोऽपि च स्पर्शत्वादिसहितः। अपिशब्दार्थमाह-रूपान्यदिति। चक्षुषो योग्यं रूपं न त्वचो योग्यं रूपादन्यत्तु यच्चक्षुषो योग्यं रूपवद्द्रव्यादिकं तत्सर्वं त्वगिन्द्रियस्य यो·

(१ ननु त्रुटेः स्पार्शनानङ्गीकारात्तत्स्पार्शनवारणाय स्पर्शान्यद्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवद्द्रव्यसमवायत्वेन हेतुत्वस्य वाच्यतया वायोः स्पार्शनाङ्गीकारो नोचितः, अन्यथा वायुप्रभागतसंख्यापरिमाणयोस्त्वचा ग्रहणप्रसङ्गादित्यत आह—वायुप्रभयोरिति अत्र प्रभोपादानं दृष्टान्तार्थम्। गृह्यत एवेति। तथा च वायुगतसंख्यादिग्रहे इष्टापत्त्या वायोः स्पार्शनाङ्गीकारे बाधकाभाव इति भावः।

(२) सजातीयसंवलनाभाव इत्यर्थः। (३) दोषादिति। सजातीयसंवलनादिरूपदोषादित्यर्थः।

ग्यमित्यर्थः । अत्रापि द्रव्याध्यक्षे-त्वगिन्द्रियजन्येपि द्रव्यप्रत्यक्षे, रूपं कारणं-समवायेन रूपं हेतुः । रूपं विना चक्षुषा वायोः प्रत्यक्षासम्भवेऽपि स्पर्शवलात्त्वगिन्द्रियेण वायोःस्पार्शनं सम्भवतीति वदतां मीमांसकानां मतनिरासायेदमुक्तम्, बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य कारणत्वकल्पनेन रूपं विना वायोस्त्वचापि प्रत्यक्षासम्भवादिति भावः ॥ ५६ ॥

त्वचो योगो मनसा ज्ञानकारणम् ।

त्वचो योग इति । त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः । किं तत्र प्रमाणं ? सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति । ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं वा स्मरणरूपं वा ? नाद्यः—अनुभवसामग्र्यभावात् । तथाहि—चाक्षुषादिप्रत्यक्षे चक्षुरादिना सह मनःसंयोगस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम् । ज्ञानादेरभावादेव न मानसं प्रत्यक्षम्, ज्ञानाद्यभावे चात्मनोऽपि न प्रत्यक्षमिति । एवं व्याप्तिज्ञानाभावादेव नानुमितिः, सादृश्यज्ञानाभावान्नोपमितिः, पदज्ञानाभावान्न शाब्दबोधः, इत्यनुभवसामग्र्यभावान्नानुभवः । उद्बोधकाभावाच्च न स्मरणम् । मैवम् । सुषुप्तिप्राक्कालोत्पन्ने(१)च्छादिव्यक्तेस्तत्संबन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात् । (२)तदतीन्द्रियत्वे मानाभावात् । सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन जायते इत्यत्रापि प्रमाणाभावात् । अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं, तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात्—विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च (तत्र) सत्त्वात् । परस्परप्रतिबन्धादेकमपि वा न स्यादिति । अत्र केचित्—पूर्वोक्तयुक्त्या त्वङ्मनःसंयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात्कल्प्यतं इति । (३)अन्ये तु सुषुप्त्य(४)नुरोधाच्चर्ममनःसंयोगस्य ज्ञानहेतुत्वं

(१) इच्छाया आदिरिति व्युत्पत्त्या ज्ञानमात्रं विवक्षितम् । (२) ज्ञानातीन्द्रियत्वे ।
(३) मिश्रमतमाहान्ये त्विति । (४) सुषुप्तौ ज्ञानानुत्पादानुरोधेनेत्यर्थः ।

कल्प्यते, चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति ॥

मनसा संयोगे स्वार्थमात्रगोचरधीजनकेभ्यश्चक्षुरादिभ्यस्त्वचो विशेषमाह-त्वचो योगो मनसेति। त्वगिन्द्रियस्य मनआख्येन्द्रियेण संयोगो ज्ञानकारणं जन्यज्ञानमात्रं प्रति कारणमित्यर्थः। अन्यथा सुषुप्तौ मनस्तत्संनिकर्षादिमात्रघटितसामग्रीसापेक्षात्ममनस्संयोगाज्ज्ञानापत्तेःन चेष्टापत्तिः,'अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता? नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' इत्यादिश्रुतिविरोधप्रसङ्गात्। तत्र पुरीतत्प्रविष्टस्य मनसो ज्ञानं प्रत्यसामर्थ्येन ज्ञानाभावस्योपपादनात्। असामर्थ्ये त्वक्सम्बन्धाभावादूह्यमित्याद्यन्यत्र विस्तरः।

मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥

मनोग्राह्यमिति। मनोजन्यप्रत्यक्षविषय इत्यर्थः। मतिर्ज्ञानम्। कृतिः–प्रयत्नः। एवं सुखत्वादिकमपि मनोग्राह्यम्। एवमात्मापि मनोग्राह्यः, किन्तु 'मनो मात्रस्य गोचरः' इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ॥५७॥

मनसोऽपि द्रव्यं विषयः स चात्मा मनोमात्रस्य गोचर इति प्रागुक्तः, अधुना तद्गुणाः के योग्यास्तत्राह–मनोग्राह्यमिति। मतिर्ज्ञानं कृतिः–यत्नः सुखत्वादिकमपि बोध्यम् ॥ ५७ ॥

ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते।

ज्ञानमिति। चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न संभवति–पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तथाच प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव(१) ज्ञानं जायते, तदेव निर्विकल्पकम्। तच्च न प्रत्यक्षम्। तथाहि—वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति

(१) वैशिष्ट्यानिष्ठसांसर्गिकविषयताशून्यमेवेत्यर्थः वैशिष्ट्यानिष्ठसांसर्गिकविषयतानिरासेनैव घटघटत्वयोर्विशेष्यताप्रकारताशून्यत्वं लब्धं तयोः वैशिष्ट्यसांसर्गिकविषयतानियतत्वादिति दिनकरी।

घटमहं जानामीति प्रत्ययात् । तत्रात्मनि ज्ञानं प्रकारीभूय भासते, ज्ञाने घटस्तत्र घटत्वम् । यः प्रकारः स एव विशेषणमित्युच्यते । विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते । विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम् । निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न संभवति । घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न संभवति-(१)जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमात् ।

अतो विशेषमाह-ज्ञानं यन्निर्विकल्पाख्यमिति । घटोयमिति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् दण्डीतिज्ञानवदित्यनुमानेन प्रयोज्यायां विशेषणज्ञानजन्यत्वानुमितौ विशेषणज्ञानस्य सविकल्पकत्वेऽनवस्थानान्निर्विकल्पकत्वं सिद्धम् । तच्च निर्विकल्पकमतीन्द्रियं प्रत्यक्षाविषयः । यद्यपि गुणत्वविशिष्टलौकिकविषयतासम्बन्धेन प्रत्यक्षे धर्मादिव्यावृत्तजातिविशेषात्मकेन योग्यविशेषगुणत्वेन हेतुत्वान्निर्विकल्पकस्यापि घटमहं जानामीति प्रत्यक्षं वक्तुं शक्यम्, तथापि तद्धर्मावच्छिन्नविशेष्यकत्वप्रकारतानिरूपिततत्प्रकारकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन ज्ञानप्रत्यक्षं प्रति तादात्म्येन तद्धर्मावच्छिन्नविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वेन हेतुत्वस्य घटो भूतलं चेति समूहालम्बनानन्तरं घटत्वेन भूतलं जानामीत्यनुव्यवसायवारणायाभ्युपगमात्तस्य निष्प्रकारकत्वेन प्रत्यक्षासम्भवादिति भावः । ननु यत्र दण्डीतिविशिष्टवैशिष्ट्यबुद्धिस्तत्र दण्डज्ञानस्य विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वं न विशेषणज्ञानत्वेन मानाभावात्, घट इति विशिष्टबुद्धौ तु विशेषणविशेष्यसंनिकर्षस्यैव हेतुत्वमिति चेन्न । जातित्वावच्छिन्नाऽनवच्छिन्नप्रकारताद्वयनियमनाय विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुताया आवश्यकत्वात् । स्यादेतत् विशेषणज्ञानसत्त्वेपि कदाचित् घट इति घटत्वप्रकारकं कदाचिदत्र घटत्वमिति घटत्वविशेष्यकं ज्ञानं जायते तत्र किं नियामकमिति चेत्, अदृष्टविशेष एवेत्यवेहि । न च तर्हि सर्वत्रादृष्टविशेष एव नियामकोस्त्विति

(१) जात्यखण्डोपाध्यतिरिक्तपदार्थवृत्तिप्रकारतायाः किञ्चिद्धर्मावच्छिन्नत्वनियमादिति भावः ।

वाच्यम्, दृष्टासम्भव एवादृष्टैकशरणताया आदृतत्वात् । अन्यथैककारणपरिशेषापत्तेरित्यास्तां विस्तरः ।

**महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥**

महत्त्वमिति । द्रव्यप्रत्यक्षे महत्त्वं समवायसंबन्धेन कारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसंबन्धेन, द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेन कारणमिति । इन्द्रियमिति । अत्रापि षड्विध इत्यनुषज्यते । इन्द्रियत्वं तु न जाति पृथिवीत्वादिना सांकर्यप्रसङ्गात् । किंतु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् । आत्मादिवारणाय सत्यन्तम् । उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वाच्छब्देतरेति(१) । विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति । (२)उद्भूतत्वं न जातिः शुक्लत्वादिना सांकर्यात् । नच शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपत्वादिना चाक्षुषादौ (३)जनकत्वानुपपत्तेः । किंतु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूटश्चोद्भूतत्वम् । तच्च संयोगादावप्यस्ति । तथाच शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादावप्यस्त्यतो विशेषेति । कालादिवारणाय विशेष्यदलम् । इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय, नवीनमते कालादौ रूपाभावप्रत्यक्षे संनिकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेर्वारणाय मनःपदम् । ज्ञानकारणमित्यपि तद्वारणाय । कारणमिति । असाधारणं कारणं करणम् । असाधारणत्वं व्यापारवत्त्वम् ॥ ५८ ॥

परमाण्वादिप्रत्यक्षवारणाय प्रत्यक्षे कारणान्तरमप्याह—महत्त्वमिति ॥ घ्राणजादिप्रभेदेन षड्विधेऽपि प्रत्यक्षे साक्षात्परम्परया वा

---

(१) तथा च तत्र अव्याप्तिरिति भावः । (३)विशेषपदस्य प्रयोजनं वक्तुं भूमिकामाहोद्भूतत्वमिति ।

(२) एकैकस्य कारणतावच्छेदकत्वे व्यभिचारात्, कूटस्यैकमात्रवृत्तितया कारणतानवच्छेदकत्वादित्यर्थः ।

महत्त्वं हेतुरित्यर्थः । तत्र द्रव्ये समवायेन जात्यादौ सामानाधिकरण्येनेति विवेकः । तत्र लौकिकेत्यनेनालौकिकप्रत्यक्षनिरासः ॥५८॥

विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषु समवेतानां तथा तत्समवायतः ।
तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
(१)प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥
विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥

व्यापारः—संनिकर्षः। षड्विधं संनिकर्षमुदाहरणद्वारा प्रदर्शयति—द्रव्यग्रहस्त्विति । द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम्। द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् । एवमग्रेऽपि । (२)वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणं, द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणं, द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः । एवमन्यत्रापि विशिष्यैव कार्यकारणभावः । (३)परन्तु पृथिवीपरमाणुनीले नीलत्वं पृथिवीपरमाणौ पृथिवीत्वं च चक्षुषा कथं न गृह्यते? तत्र परंपरयोद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च सत्त्वात् । तथाहि—नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते, तथाच महत्त्वसंबन्धो घटनीलमादाय वर्तते, उद्भूतरूपसंबन्धस्तूभयमादायैव वर्तते । एवं पृथिवीत्वेऽपि घटादिकमादाय महत्त्व-

(१) चन्द्रिकाकारमते त्विदं कारिकार्धं यदि स्यादित्यस्याग्रे पठितव्यम् ।

(२) ननु द्रव्यप्रत्यक्षे इन्द्रियसन्निकर्षत्वेन हेतुत्वे त्वक्प्रभासंयोगाच्चाक्षुषापत्तिः एवमन्धकारे घटचक्षुःसंयोगात् स्पार्शनापत्तिश्चेत्यत आह वस्तुतस्त्विति ।

(३) नन्वात्मप्रत्यक्षानुरोधेन मनःसंयोगस्य ज्ञानादिप्रत्यक्षार्थं मनःसंयुक्तसमवायस्य प्रत्यासत्तित्वेपि चक्षुरादिसंयोग— तत्संयुक्तसमवाययोः प्रमाणाभावः चक्षुरादिसंयुक्तसमवेतसमवायेनैव त्र्यणुकादेश्चाक्षुषाद्युपपत्तेरत आह परंत्विति । परंपरया स्वाश्रयसमवेतसमवेतत्वादिना ।

संबन्धो बोध्यः । एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् । (१)तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यम् । इत्थञ्च परमाणुनीलादौ न नीलत्वादिग्रहः, परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् । एवं वाय्वादौ न सत्तादिचाक्षुषम्—तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात् । एवं यत्र घटस्य पृष्ठावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्त्वग्रावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् । एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणं, द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः, द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् । अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्ववदेव बोध्यम् । एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः, गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम् । एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः, रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः, शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम् । अत्र सर्वत्र प्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकं प्रत्यक्षमिन्द्रियसंयोगादिकं विनापि संभवति । एवमात्मनः प्रत्यक्षे मनःसंयोगः, आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः, आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम् । अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसंबद्धविशेषणता हेतुः । वैशेषिकमते तु समवायो न प्रत्यक्षः । अत्र यद्यपि विशेषणता नानाविधा, तथाहि—भूतलादौ घटाद्यभावः संयुक्तविशेषणतया गृह्यते,

(१) उद्भूतेत्यादि । तथा च महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्य त्रसरेण्वाद्यभावात् तच्चाक्षुषाद्यनुपपत्तिरतः संयोगस्य प्रत्यासत्तित्वमावश्यकमिति भावः ।

संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया, संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया, कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया, एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया, एवं घटाभावादौ पटाभावः चक्षुःसंयुक्तविशेषणविशेषणतया, एवमन्यदप्यूह्यम् । तथापि विशेषणतात्वरूपेणैकैव सा गण्यते । अन्यथा षोढा संनिकर्ष इति प्राचां प्रवादो व्याहन्येतेति ।

(१)यदि स्यादुपलभ्येतेति । अत्राभावप्रत्यक्षे योग्यानुपलब्धिः कारणम् । तथाहि—भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते । तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम् । तत्र योग्यताप्यपेक्षिता । सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा । तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः।तथाहि—यत्रालोकसंयोगादिकं वर्तते, तत्र—यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते—तत्र घटाभावादिप्रत्यक्षं भवति । अन्धकारे तु नापादयितुं शक्यते, तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम् । स्पार्शनप्रत्यक्षं तु भवत्येव—आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् । गुरुत्वादिकं यदयोग्यं तदभावस्तु न योग्यस्तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् । वायावुद्भूतरूपाभावः, पाषाणे सौरभाभावः, गुडे तिक्ताभावः, वह्नावनुष्णत्वाभावः, श्रोत्रे शब्दाभावः, आत्मनि सुखाद्यभावः, एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते—तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् । संस-

(१) अत्र भाट्टा विशेषणतां प्रत्यासत्तिं नाङ्गीकुर्वन्ति समवायस्य प्रत्यक्षत्वानङ्गीकारेणाभावप्रत्यक्ष इन्द्रियाणामकरणत्वेन च तत्प्रयोजनाभावात्, तत्र योग्यानुपलब्ध्यैवं प्रमाणेन निर्वाहादिति वदन्ति तन्मतदूषणायाह यदि स्यादिति । तत्र विशेषणतया अभावानां ग्रहो भवेदिति पूर्वेणान्वयः। अत्र भट्टमतनिरास उक्तो दिनकर्याम्—तथा चेन्द्रियाणामभावप्रत्यक्षे जननीये योग्यानुपलब्धेः सहकारितामात्रेण निर्वाहेऽतिरिक्तप्रमाणकल्पनमनुचितमिति ।

र्गोभावप्रत्यक्षे प्रतियोगिनो योग्यता—अन्योन्याभावप्रत्यक्षे स्वाधिकरण-योग्यताऽपेक्षिता, अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

व्यापारमाह—विषयेन्द्रियसम्बन्धो व्यापार इति। अनेन लौकिके विषयस्यापि कारणत्वमित्यपि प्राप्तं—तज्जन्यत्वे सति तज्जन्यजनको व्यापार इति व्यापारलक्षणात्, भवति च विषयेन्द्रियसंयोगो विषयेन्द्रिययोर्जन्यो विषयेन्द्रियजन्यज्ञानजनकश्चेति। ननु विषयस्य प्रत्यक्षं प्रति हेतुत्वे किं मानमिति चेत्, अतीतानागतप्रत्यक्षवारणाय तत्कल्पनस्यावश्यकत्वमेवेत्यवेहि। न च सन्निकर्षकारणतयैव तद्गतार्थता, विनश्यदवस्थसंनिकर्षादिना तदापत्तिवारणाय पृथक् विषयस्य हेतुताया आवश्यकत्वात्। द्रव्यग्रहस्त्विति। ननु संयोगस्य प्रत्यासत्तित्वं व्यर्थं-संयुक्तसमवायेनैव द्रव्यग्रहसम्भवात्-इन्द्रियसंयुक्ते कपालादौ तेषां समवायादिति चेत्, न आ मनि तदसम्भवात्। तस्यासमवेतत्वादित्यास्तां विस्तरः ॥५९॥

संयुक्तसमवायतः-द्रव्येषु समवेतानाम्, इन्द्रियसंयुक्ते द्रव्ये रूपादीनां समवायात् द्रव्यसमवेतानां गुणकर्मसामान्यानां-ग्रहः प्रत्यक्षमित्यर्थः। तथा तत्समवायतस्तत्रापि समवेतानां, संयुक्तसमवायेन संयुक्तसमवेतानामिव तत्समवायतः संयुक्तसमवेतसमवायतः इन्द्रियसंयुक्तं यद्द्रव्यं तत्समवेतं रूपादि तत्र रूपत्वादेः समवायात्, तत्रापि इन्द्रियसंयुक्तसमवेतेऽपि रूपादौ समवेतानां रूपत्वादीनां ग्रह इत्यर्थः। शब्दस्य समवायतः, कर्णशष्कुल्यवच्छिन्ने नभसि शब्दस्य समवायात् तेनैव तद्ग्रह इत्यर्थः ॥ ६० ॥

तद्वृत्तीनामिति। शब्दवृत्तीनां शब्दत्वकत्वादीनां समवेतसमवायेन-श्रोत्रसमवेते शब्दे शब्दत्वादेर्यः समवायस्तेनैव ग्रह इत्यर्थः। अभावस्याभावत्वादेव संयोगसमवाययोर्बाधात् सम्बन्धान्तरेणैव तदुपपादयति-विशेषणतयेति। द्रव्यादीनां संयोगादिनेवाभावानां विशेषणताख्यसम्बन्धेन प्रत्यक्षं भवतीत्यर्थः। विशेषणता स्वरूपसम्बन्धविशेष इति प्राचीनाः। अतिरिक्तेति नव्याः। सेयं द्वेधा-इन्द्रियविशेषणता इन्द्रियसम्बद्धविशेषणता च। तत्राद्या शब्दाभावग्रहे, अन्त्या घटाभावादिग्रहे हेतुरिति विवेकः ॥ ६१ ॥

तावन्मात्रेण तमसि घटाभावादेश्चाक्षुषवारणाय योग्यानुपलब्धिरूपां विशेषसामग्रीमाह—यदि स्यादिति । यत्र यस्मिन् प्रकृष्टालोकाद्यवच्छिन्ने भूतलादौ यदि स्यात् घटादिः वर्तेत तर्हि भूतलादिवदुपलभ्येत दृश्येतेत्येवं प्रसज्यते उपलब्धिरापादयितुं शक्यते उपलब्धिस्तु नास्ति तत्रैवाभावप्रत्यक्षं भवति नान्यत्रेत्यर्थः । चक्षुरा भाववत्प्रत्यक्षे जननीये तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकोपलम्भाभावरूपा योग्यानुपलब्धिः सहकारिकारणं तदभावादेव तमसि सत्यपीन्द्रियसम्बन्धादौ नाभावप्रत्यक्षम् , न वा घटाभाववति घटभ्रमदशायां घटाभावस्य—जलपरमाणौ पृथिवीत्वात्यन्ताभावस्य—भूतलादौ पिशाचात्यन्ताभावादेः सम्बन्धसत्त्वेपि प्रत्यक्षं—प्रतियोग्यंशेऽभावांशे वा प्रत्यक्षजनकसामग्रीघटकयोग्यसन्निकर्षाद्यभावेन योग्यानुपलब्धेरभावादिति भावः । नन्वेवमनुपलब्धेः प्रमाणान्तरत्वमेवाभ्युपेयताम् , तथासति विशेषणतारूपप्रत्यासत्त्यन्तराकल्पननिबन्धनं लाघवमपीति चेन्न विजातीयप्रमाकल्पनापेक्षया प्रत्यासत्त्यन्तरकल्पनायां लाघवात् , व्यापारवत्त्वाभावेन तस्याः प्रमाणत्वायोगाच्च । न च व्यापाराभावेपि फलायोगव्यवच्छिन्नकारणत्वरूपं करणत्वमुपपद्यत एव, अत एव 'साधकतमं करण'मिति सूत्रमपीति वाच्यम् , फलायोगव्यवच्छिन्नकारणत्वपक्षस्य गौरवेणान्यत्र निरासादिति सङ्क्षेपः ॥

विशेषणतासन्निकर्षो न केवलमभावप्रत्यक्षानुरोधात्कल्प्यते किन्त्विह कपाले घटः समवेत इत्यादिसमवायप्रत्यक्षानुरोधादपीत्याह—प्रत्यक्षं समवायस्येति । इन्द्रियसन्निकृष्टे कपालादौ घटादिसमवायस्य विशेषणत्वादिति भावः ॥ ६२ ॥

एवं प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम् । तत्र लौकिकप्रत्यक्षे षोढा संनिकर्षो वर्णितः । अलौकिकसंनिकर्षस्त्विदानीमुच्यते—

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥**

अलौकिकस्त्विति । व्यापारः—संनिकर्षः । सामान्यलक्षण इति । सामान्यं लक्षणं यस्येत्यर्थः । तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते । तच्चेन्द्रियसम्बद्धवि-

शेष्यकज्ञानप्रकारीभूतं बोध्यम्। तथाहि—यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं जातं, तत्र ज्ञाने धूमत्वं प्रकारः,तत्र धूमत्वेन संनिकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते। अत्र यदीन्द्रियसंबद्धप्रकारीभूतमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात्—तत्र धूमत्वेन सहेन्द्रियसंबन्धाभावात्। मन्मते तु इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानम्, तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः। इन्द्रियसंबन्धश्च लौकिको ग्राह्यः। इदं च बहिरिन्द्रियस्थले। मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः ॥ ६२ ॥

लौकिकप्रत्यक्षनियामकसम्बन्धमुपपाद्यालौकिकसाक्षात्कारस्योपपादकमाह-अलौकिकः स्त्विति। अलौकिकलौकिकविषयताशून्यप्रत्यक्षहेतुः व्यापारः सन्निकर्षः सामान्यलक्षणः सामान्यमेव लक्षणं स्वरूपं विषयो वा यस्येति सामान्यस्वरूपः सामान्यज्ञानात्मको वेत्यर्थः। स्पष्टमन्यत् ॥ ६२ ॥

(१)परन्तु समानानां भावः सामान्यं, तच्च क्वचिन्नित्यं धूमत्वादि, क्वचिच्चानित्यं घटादि। यत्रैको घटः संयोगेन भूतले समवायेन कपाले वा ज्ञातस्तदनन्तरं सर्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति (२)तत्रेदं बोध्यम्। (३)परन्तु सामान्यं येन संबन्धेन ज्ञायते तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः। (४) किन्तुयत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं

---

(१) आसत्तिराश्रयाणां तु—इत्यादिमूलमवतारयितुं भूमिकां रचयति परन्त्वित्यादिना। तथाच ज्ञायमानसामान्यमित्यत्र जातेरेव सामान्यपदार्थत्वे अनित्यसामान्यस्याप्रसिद्ध्या तत्र दोषदानानुपपत्त्या तद्वारणार्थं सामान्यमुपेक्ष्य तज्ज्ञानस्य प्रत्यासत्तित्वोपगमवैयर्थ्यमित्यानित्यस्य सामान्यत्वव्यवस्थापनं उत्तरग्रन्थावतरणोपयुक्तमिति बोध्यम्।

(२) ज्ञायमानमनित्यं सामान्यन्तत्र प्रत्यासत्तिरिति बोध्यमित्यर्थः।

(३) परंपरया प्रत्यासन्नस्य घटत्वादेः प्रत्यासत्तित्वसम्भवात्किन्त्वित्यादिवक्ष्यमाणदोषासङ्गतिरत आह परन्त्विति। तथाच घटत्वस्य परंपरया कपालादावज्ञानाद्वक्ष्यमाणदोषसङ्गतिः।

(४) एवंचेत्यर्थः।

न स्यात्-सामान्यस्य तदानीमभावात् । किञ्चेन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसंबन्धं विनापि तादृशज्ञान-प्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्य-विषयकं ज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह—

आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ।

आसत्तिरित्यादि । आसत्तिः प्रत्यासत्तिरित्यर्थः । तथाच 'सामान्य-लक्षणः' इत्यत्र लक्षणशब्दस्य विषयोऽर्थः, तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते ॥

'सामान्यमत्रेन्द्रियसम्बद्धविशेष्यकज्ञाने प्रकारीभूतं ग्राह्यं तेन धूलीपटले धूमभ्रमानन्तरं तेन सन्निकर्षेण सकलधूमप्रत्यक्षोपपत्तिः इन्द्रियसम्बद्धधूमविशेष्यकधूम इति प्रमायामिवेन्द्रियसम्बद्धधूलीप-टलविशेष्यकधूम इति भ्रमेपि धूमत्वस्य प्रकारत्वात्, तेन च सकल-धूमप्रत्यक्षादिति' वैशेषिकमतम् । तन्न साधीयः-यत्र नानाधिकरणवृ-त्त्येकव्यक्तिर्घटादिकमनित्यं सखण्डसामान्यं प्रत्यासत्तिस्तत्र तदभावद-शायां तया प्रत्यासत्त्या तद्घटवतां सर्वेषां ज्ञानानुदयप्रसङ्गात् । न च तत्र घटत्वमेव तद्व्यक्तिसम्बन्धेन परंपरया प्रत्यासत्तिरिति वाच्यम्, यत्र तद्व्यक्तिसम्बन्धेन परंपरया घटत्वादि न भातं किन्तु तद्व्यक्तित्वेन तद्व्यक्तिप्रकारेण तद्व्यक्तिमतां ज्ञानं तत्र गत्यभावात् । न च तत्र परम्प-रया तद्व्यक्तित्वमेव प्रत्यासत्तिरिति वाच्यम्, तद्व्यक्तित्वस्य तद्व्यक्ति-रूपाद्यात्मकतया तस्यापि नष्टत्वात् । तस्मान्न सामान्यं प्रत्यासत्तिः किन्तु सामान्यज्ञानमेवेति नैयायिकमतमाह-आसत्तिरिति । सखण्डा-खण्डभेदेन द्विविधसामान्यस्य ज्ञानं सामान्याश्रयाणां सर्वेषां भूतभ-विष्यद्वर्तमानासन्निहितानां प्रत्यक्षे जननीये इन्द्रियस्य प्रत्यासत्तिरि-त्यर्थः । तद्व्यक्त्यभावदशायामपि तज्ज्ञानस्य सम्भवादुपपद्यते प्रत्या-सत्तित्वमिति भावः ।

ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह—

तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥

तदिन्द्रियजेति। अस्यार्थः—यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किञ्चिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्री अपेक्षिता। सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकम्। तेनान्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जन्यते ॥६४॥

ननु भवति सामान्यज्ञानं प्रत्यासत्तिस्तथापि यत्रेन्द्रियसम्बन्धं विनापि स्मृत्यादिरूपं सामान्यज्ञानमस्ति तत्र सामान्याश्रयाणां सर्वेषां प्रत्यक्षं स्यात्तत्राह–तदिन्द्रियजेति। तत्पदं ग्राहकेन्द्रियपरम्, तदिन्द्रियजन्यो यस्तद्धर्मबोधस्तद्धर्मप्रकारकलौकिकसाक्षात्कारात्मकस्तस्य सामग्री चक्षुःसंयोगालोकादिरूपाश्रया अपेक्ष्यते सहकारिविधयाऽपेक्षिता भवति, तथा च स्वप्रकारीभवद्धूमत्वाद्याश्रयत्वसम्बन्धेन धूमत्वादिप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति स्वविषयधूमत्वाद्याश्रयत्वसम्बन्धेन निर्विकल्पकस्मृत्यादिसाधारणधूमत्वादिज्ञानत्वेन हेतुत्वेऽपि न चक्षुःसंयोगादिशून्यकाले पूर्वोक्तातिप्रसङ्गः उक्तसामग्र्यैव तद्वारणसम्भवात्। सामान्यलक्षणजन्यज्ञानं हि सन्निकृष्टांशे लौकिकमन्यांशेऽलौकिकं भवति अतश्चक्षुःसंयोगादिशून्यकाले संनिकृष्टांशे लौकिकसामग्रीविरहादेवान्यांशेपि सामान्यलक्षणज्ञानं न भवतीति भावः। ननु सामान्यस्य तज्ज्ञानस्य वा प्रत्यासत्तित्वं विना किमनिष्टं स्यादिति चेत्, पर्वतीयधूमादनुमित्यसंभव एवेत्यवेहि तथाहि-यदि सामान्यस्य तज्ज्ञानस्य वा प्रत्यासत्तित्वं न स्यात्तदा महानसीयवह्निधूमेनेन्द्रियसंयोगात्तत्रैव सहचारग्रहाद्व्याप्तिग्रहे कथं पर्वतीयधूमादनुमितिःस्यात्, पर्वतीयधूमस्याप्रत्यासन्नत्वेन व्याप्त्यग्रहात, सामान्यलक्षणाभ्युपगमे तु भवति तत्रापि व्याप्तिग्रहः महानसीयधूमे धूमत्वेन व्याप्तिग्रहसमय एव धूमत्वंवह्नित्वसामान्यलक्षणया यावद्वह्निधूमभानादिति संक्षेपः। वस्तुतः सामान्यलक्षणाया अनभ्युपगमेपि न हानिः सहचारेण महानसीयधूमे व्याप्तिग्रहसमये पर्वतीयवह्निधूमयोरसन्निकृष्टत्वेपि धूमत्वं धर्मितावच्छेदकीकृत्य महानसीयधूमे गृहीताया व्याप्तेः पर्वतीयधूमे दृष्टे धूमत्वज्ञानेन सम्बन्धिज्ञानविधया स्मारितायाः स्मृतिरूपोपनायकेनोपनीतभानसम्भवात्। न च तद्धर्मिणि पूर्वं गृहीतस्यैवोपनायकवशात्प्रत्यक्षे भानमिति नियमात् कथं पर्वतीयधूमे व्याप्तेरुपनीतभानं तत्र पूर्वं व्याप्तेरनवगमादिति वाच्यम्, यद्धर्मावच्छे-

देन सद्रूत्वं गृहीतं तद्धर्मावच्छेदेन तदुपनीतभानमित्येव नियमात् । अस्ति चात्र धूमत्वेन व्याप्तेर्ग्रहाद्धूमत्वेनैवोपनीतभानमिति इदमपि व्याप्यतावच्छेदकस्य धूमत्वादेर्व्याप्तित्वपक्षे, अन्यथा महानसीयधूम-वृत्तिव्याप्तेः पर्वतीयधूमेऽसत्त्वात्तत्र तत्प्रत्यक्षानुपपत्तेः। तथाच व्याप्ति-नानात्वप्रक्षेपो यत्रावगत इति नियमाग्रह एव सामान्यलक्षणाऽऽव-श्यकी नेतरथेत्यास्तां विस्तरः ॥ ६४ ॥

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञान-रूपा, तदा तयोर्भेदो न स्यादत आह—

विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।

विषयीति । सामान्यलक्षणाप्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति । ज्ञानलक्षणाप्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यास-त्तिरिति । अत्रायमर्थः—प्रत्यक्षे संनिकर्षं विना भानं न संभवति, तथाच सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकल-वह्नीनां च भानं कथं भवेत् ? तदर्थं सामान्यलक्षणा स्वीक्रियते । न च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यम्, प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद्धूमो वह्निव्याप्यो न वेति संश-यानुपपत्तेः । मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्त-रीयदेशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः संभवति । न च सामान्यलक्षणा-स्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यम्, प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात् । एवं ज्ञानलक्षणाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभस्य भानं कथं(१) स्यात्? यद्यपि सामान्यलक्षणयापि सौरभस्य भानं

(१) चन्दनखण्डस्य चाक्षुषे जायमाने उपस्थितसौरभभानं न स्यात् तत्र चक्षुःसंनिकर्षाभावा-दिति भावः ।

संभवति तथापि (१)सौरभत्वस्य भानं (२)ज्ञानलक्षणया । (३)एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया ॥

सामान्यज्ञानस्वरूपसामान्यलक्षणसन्निकर्षाद् ज्ञानलक्षणसन्निकर्षे विशेषमाह—विषयीति । ज्ञानलक्षणः ज्ञानात्मकः व्यापारः सन्निकर्षः यस्य विषयी यद्विषयकस्तस्यैव प्रत्यासत्तिस्तद्विषयकप्रत्यक्षे जननीये इन्द्रियसन्निकर्ष इत्यर्थः । तथाच सामान्यलक्षणा सामान्यज्ञानं सामान्याश्रयाणां प्रत्यासत्तिः ज्ञानलक्षणा तु यद्विषयकं ज्ञानं तेषाम्, अत एव सुरभि चन्दनमित्यादौ सौरभस्येव सौरभत्वादेरपि भानम् अन्यथा सौरभत्वस्य स्वरूपत एव प्रकारत्वेन तद्वृत्तिधर्माज्ञानात्सामान्यलक्षणया तज्ज्ञानासम्भवादिति सङ्क्षेपः । सौरभत्वसामान्यलक्षणया सौरभभाननिर्वाहे सौरभत्ववृत्तिधर्मज्ञानाभावेन सौरभत्वभानस्य सामान्यलक्षणया निर्वाहासम्भवात् । वस्तुतः सामान्यलक्षणया प्रत्यक्षे जननीये तत्तद्धर्मप्रकारतानिरूपितविशेष्यताश्रये लौकिकप्रत्यक्षसामग्र्याः सहकारित्वात् तां विना सामान्यलक्षणया सुरभि चन्दनमित्यादौ सौरभस्य सौरभत्वस्य वा भानासम्भवाद्भानोपपत्तये ज्ञानलक्षणावश्यकीत्यन्यत्र विस्तरः ।

योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥

योगजो द्विविध इति । योगाभ्यासजनितो धर्मविशेषः श्रुतिस्मृतिपुराणादिप्रतिपाद्य इत्यर्थः । युक्तयुञ्जानभेदत इति । युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः ॥ ६५ ॥

---

(१) स्वरूपतः सौरभत्वस्य भानमित्यर्थः ।

(२) ज्ञानलक्षणया—ज्ञानलक्षणयैव । तदानीं सौरभत्वांशे धर्मान्तरस्यागृहीततया सामान्यलक्षणया तज्ज्ञानानिर्वाहादिति भावः । ननु धर्मान्तरस्य सौरभत्वांशेऽग्रहेऽपि सौरभत्वसामान्यलक्षणयैव सौरभादेर्भानमस्तु सौरभत्वप्रकारकसौरभविशेष्यकत्वस्यैव तत्कार्यतावच्छेदकत्वादिति चेत् । न । सौरभत्वादिविषयताप्रयोजिकायाः स्वविषयसौरभत्वादिमत्त्वरूपस्य सामान्यलक्षणायाः सम्बन्धस्य सौरभत्वेऽभावेन सामान्यलक्षणया तज्ज्ञानानिर्वाहादिति ध्येयम् ।

(३) ननु विशेषणज्ञानजन्यतावच्छेदकं विशिष्टबुद्धित्वं, ज्ञानलक्षणायास्तु विशिष्टप्रत्यक्षत्वमिति न क्वचिन्निर्वाहः, एवं यत्र ज्ञानलक्षणया स्वविषयमुख्यविशेष्यकं भानं तत्र विशेषणज्ञानकारणतयापि न निर्वाह इत्यत आह एवमिति ।

योगजं व्युत्पादयति योगज इति । द्विविध इति । योगाज्जातो योगजः "योगश्चित्तवृत्तिनिरोधः" तस्माज्जातो धर्मविशेषो द्विविधो द्विप्रकारक इत्यर्थः । योगिद्वैविध्येन तस्य द्वैविध्यमुपपादयति—युक्तयुञ्जानभेदत इति । युक्ताः—जन्मना योगवन्तो ब्रह्मादयः, युञ्जानाः—श्रद्धादिसाधनसाध्ययोगवन्तो संवर्तकारुणिश्वेतकेतुप्रभृतयः अनयोः "भवप्रत्ययो विदेहप्रकृतिलयानाम्" "श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्" इति योगसूत्रप्रतिपादितभेदाद्योगजधर्मोऽपि द्विविध इत्यर्थः ॥ ६५ ॥

युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।

युक्तस्य सर्वदा भानमिति । युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति । द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति ।

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डम् ॥

---

तयोर्लक्षणमाह—युक्तस्येति । भवप्रत्ययस्य योगिनः सर्वदा संयमं विनैव भानं सर्वार्थसाक्षात्कारः । अपर उपायप्रत्ययः चिन्तासहकृतः—चिन्ताया संयमेन युक्तः जातिशेषः ॥ अस्यैव फलवैभवः "परिणामत्रयसंयमादतीतानागतज्ञानम्" इत्यादिसूत्रैर्योगशास्त्रेषु व्युत्पादितः ॥

इति श्रीनारायणतीर्थकृतायां न्यायचन्द्रिकायां प्रत्यक्षखण्डम् ।

अनुमितिं व्युत्पादयति—

व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥

अनुमायां,—

व्यापारस्त्विति । अनुमायामनुमितौ व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः । तथाहि—येन पुरुषेण महानसादौ धूमे वह्निव्याप्तिर्गृहीता पश्चात्स एव पुरुषः क्वचित्पर्वतादावविच्छिन्नमूलां धूमलेखां पश्यति, तदनन्तरं धूमो वह्निव्याप्य इत्येवंरूपं व्याप्तिस्मरणं तस्य भवति, पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं, स एव परामर्श इत्युच्यते । तदनन्तरं पर्वतो वह्निमानित्यनुमितिर्जायते ॥ ६६ ॥

प्रत्यक्षस्येव प्रमाणत्वादनुमानस्यापि फलव्यापारकरणानामाव-श्यकत्वात्तानि दर्शयति—व्यापारस्त्विति। परामर्शोऽनुपदमेव वक्ष्यमाणोऽनुमितिरूपे फल व्याप्तिज्ञानस्य व्यापार एवेत्यर्थः ॥ तर्हि करणं किं ? तत्राह—करणं व्याप्तिधीर्भवेदिति । व्याप्तिप्रकारकहेतुविशेष्यकनिश्चयो—धूमो वह्निव्याप्य इत्याद्याकारः—करणमित्यर्थः । व्यापारवद-साधारणं कारणमेव करणं न फलायोगव्यवच्छिन्नकारणं तथासति प्रत्यक्षेऽपीन्द्रियसंयोगस्यैव करणत्वापत्तेरिन्द्रियाणां ज्ञानकरणत्वं न स्यात् । न चेष्टापत्तिः, "ज्ञानकरणमिन्द्रियमिति" सूत्रविरोधात्, फला-योगव्यवच्छिन्नकारणत्वस्य व्यापारवदसाधारणकारणत्वापेक्षया गुरुत्वेन हेयत्वाच्च । तस्मादत्र व्याप्तिज्ञानमेव करणं परामर्शस्तु व्यापार एवेति भावः ॥ ६६ ॥

अत्र प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं (१)लिङ्गमनुमितिकरणमिति वदन्ति, तद्दूषयति—

ज्ञायमानं लिङ्गं तु करणं नहि ।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥

(१) अनुमितौ परामर्शमात्रं न हेतुः अपि तु लिंगपरामर्शः तथाच विशिष्टस्य कारणताग्रहे विशेषणस्यापि कारणताग्रहात् परामृश्यमानलिंगस्य लिंगपरामर्शस्य वा हेतुत्वमित्यत्र नियामकाभावादुभयोर्हेतुतासिद्धौ तत्र च व्यापाराभावान्न परामर्शस्य हेतुता किन्तु लिंगस्यैवेत्याशयः ।

ज्ञायमानमिति । लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह—अनाग तादीति । यद्यनुमितौ लिङ्गं करणं स्यात्तदाऽनागतेन लिङ्गेन विनष्टेन चानुमितिर्न स्यादनुमितिकरणस्य लिङ्गस्य तदानीमभावात् ॥ ६७ ॥

क्व करणं तत्राह–अनुमायामिति । अनुमितावित्यर्थः। एतेन मनोऽपि न करणमिति ज्ञापितं तस्य मानसप्रत्यक्षं प्रत्येव करणत्वादिति संक्षेपः। तत्र व्याप्तिविशिष्टतया हेतोर्ज्ञानं न करणं किन्तु व्याप्तिविशिष्टतया ज्ञायमानो हेतुरेव करण धूमादिति हेतुपञ्चम्युपलब्धेरिति वैशेषिकास्तन्न सम्यगित्याह–ज्ञायमानमिति। ज्ञायते वह्निव्याप्यो धूम इति व्याप्तिविशिष्टतया प्रतीयत इति प्रतीयमानं लिङ्गं हेतुः करणं न हि नैवानुमितिकारणमित्यर्थः॥ तत्र युक्तिमाह–अनागतादिलिङ्गेनेति । आदिनाऽतीतस्य परिग्रहः । अतीतानागतविषयको यत्र मानसो वह्निव्याप्यवत्तापरामर्शस्तत्रानुमित्यनुदयापत्तेरनुमित्यव्यवहितपूर्वक्षणे तयोरसत्त्वात्, तथाच तत्र व्यभिचारान्न तादृशलिङ्गत्वेन करणत्वमिति भावः। न च तत्र तत्प्रागभावादीनामेव लिङ्गत्वमास्तामिति वाच्यम्, तेषां तदा तद्व्याप्यत्वेनापरामृश्यमाणत्वादित्याद्यन्यत्र विस्तरः॥ ६७॥

व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।

व्याप्यस्य पक्षवृत्तित्वधीरिति । व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकम् । तच्च पक्षे व्याप्य इति ज्ञानं, पक्षो व्याप्यवानिति ज्ञानं वा। अनुमितिस्तु पक्षे व्याप्य इति ज्ञानात्पक्षे साध्यमित्याकारिका, पक्षो व्याप्यवानिति ज्ञानात्पक्षः साध्यवानित्याकारिका । द्विविधादपि परामर्शात्पक्षः साध्यवानित्येवानुमितिरित्यन्ये । (१)ननु वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति स्मरणं तत्र ज्ञानद्वयादेवानुमितिदर्शनाद्व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं न सर्वत्र कारणम्,(किंतु) व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वस्यावश्यकत्वात्तत्र

(१) मीमांसकः शंकते–नन्विति ।

विशिष्टज्ञानकल्पने गौरवाच्चेति चेत्। न। व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेः, लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम्। किञ्च धूमवान्पर्वत इति ज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्त्वात्। न च (तदानीं) गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञास्य हेतुत्वमिति वाच्यम्, चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः स्यादिति। यदि तु तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकतत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते, तदाऽनन्तकार्यकारणभावः। मन्मते तु समवायसंबन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसंबन्धेनानुमितिं जनयतीति नानन्तकार्यकारणभावः। यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानं च स्वतन्त्रं कारणमित्युच्यते, तदा कार्यकारणभावद्वयम्, वह्निव्याप्यो धूम आलोकवांश्च पर्वत इति ज्ञानादप्यनुमित्यापत्तिः स्यात्। इत्थं च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयं फलमुखगौरवस्यादोषत्वात्॥

परामर्शो व्यापार इत्युक्तम्, तत्र कः परामर्शः? इत्याकाङ्क्षायामाह-व्याप्यस्येति। व्याप्यस्य व्याप्त्याश्रयस्य धूमादेः पक्षवृत्तित्वधीः पक्षेण सह सम्बन्धज्ञानं परामर्श इत्यर्थः। नन्विदं धूमवान्पर्वत इति ज्ञान साधारणं-धूमत्वादिभ्रमेण बाष्पादौ पर्वतत्वादिभ्रमेण वृक्षादिवृत्तित्वज्ञानाव्यापकं चेति चेत्, न—स्वावच्छिन्नविषयताकत्वसम्बन्धेन व्याप्यत्वविशिष्टपक्षवृत्तित्वज्ञाने तात्पर्यात्, व्याप्त्यवच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालीति यावत्, भवति हि वह्निव्याप्यो धूमः पर्वते वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं व्याप्त्यवच्छिन्नधूमादिनिष्ठविषयतानिरूपितपर्वतत्वाद्यवच्छिन्नविषयताशालीति लक्षणसमन्वयः

(१)व्याप्यो नाम व्याप्त्याश्रयः, तत्र(२) का व्याप्तिरित्यत आह—

(१) मूले परामर्शलक्षणानन्तरं व्याप्तिनिरूपणे सङ्गतिमुपोद्घातं दर्शयन्नाह—व्याप्यो नामेति।
(२) तत्रेति घटकत्वं सप्तम्यर्थः।

**व्याप्तिः साध्यवदन्यस्मिन्नसंबन्ध(१) उदाहृतः ॥ ६८ ॥**

व्याप्तिरिति । वह्निमान् धूमादित्यादौ साध्यो वह्निः साध्यवान्महानसादिः तदन्यो जलह्रदादिः, तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्तप्तायःपिण्डादौ वह्नेः सत्त्वान्नातिव्याप्तिः । अत्र येन संबन्धेन साध्यं तेनैव संबन्धेन साध्यवान्बोध्यः(२) । अन्यथा समवायसंबन्धेन वह्निमान्वह्नेरवयवस्तदन्यो महानसादिः तत्र धूमस्य विद्यमानत्वादव्याप्ति(३)प्रसङ्गात् । साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान्बोध्यः(४) । तेन यत्किञ्चिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः । येन सम्बन्धेन हेतुता तेनैव संबन्धेन साध्यवदन्यावृत्तित्वं(५) बोध्यम् । तेन साध्यवदन्यस्मिन्धूमावयवे धूमस्य समवायसंबन्धेन सत्त्वेऽपि न क्षतिः । साध्यवदन्यावृत्तित्वं च साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः । तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः । अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात्साध्यवदन्यस्मिन्गुणादाववृत्तित्वं नास्ति, तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यम् । हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदकमिति (६)फलितोऽर्थः ॥ ६८ ॥

ननु व्याप्यत्वं व्याप्तिः सा केत्यत आह—व्याप्तिः साध्यवदिति । अत्राकाशादावतिव्याप्तिवारणाय वृत्तिमत्त्वे सतीति हेतुविशेषणं बोध्यम् । वह्निमान् धूमादित्यादौ साध्यवदन्यस्मिन् जलह्रदे हेतोरवृत्तितया

---

(१) अत्र सम्बन्धः वृत्तित्वमसम्बन्धोऽवृत्तित्वं, तेन साध्यवदन्यवृत्तित्वमिति, लक्षणं संपन्नम् ।

(२) लक्षणघटकभेदीयप्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्येत्यर्थः ।

(३) येन केनचित्सम्बन्धेन साध्यवत्त्वाभिधानेऽव्याप्तिरियं सम्बन्धसामान्येन तदाभिधाने तु धूमवान् वह्नेरित्यत्रातिव्याप्तिर्बोध्या ।

(४) उक्तप्रतियोगितैव साध्यतावच्छेदकावच्छिन्नाऽपि ग्राह्येत्यर्थः ।

(५) हेतुतावच्छेदकसम्बन्धावच्छिन्नं वृत्तित्वं ग्राह्यमित्यर्थः ।

(६) फलितोऽर्थ इति । तथा च तन्निष्ठाधिकरणतानिरूपकतावच्छेदकस्यैव तन्निरूपिताधेयतावच्छेदकत्वानियमेन विशिष्टसत्तात्वस्य गुणाधेयतानवच्छेदकत्वान्नाव्याप्तिरिति भावः ।

लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ धूमवद्भिन्नेऽयोगोलके वह्नेर्वृत्तितया नातिव्याप्तिः। न च धूमवदन्यायोगोलकवृत्तित्वेऽपि धूमवदन्यजलह्रदे तस्यावृत्तितयाऽतिव्याप्तिर्दुर्वारैवेति वाच्यम्। साध्यवदन्यनिरूपितवृत्तित्वसामान्याभावस्य विवक्षितत्वात्, वह्नौ धूमवदन्यायोगोलकवृत्तित्वस्य सत्त्वेन तथाविधसामान्याभावासत्त्वादतिव्याप्तिवारणसम्भवात्। वृत्तित्वं हेतुतावच्छेदकसम्बन्धेन बोध्यम्, तेन वह्निमदन्यस्मिन् धूमावयवे समवायेन जलह्रदे च कालिकेन धूमस्य वृत्तावपि वह्निमान् धूमादित्यादौ नाव्याप्तिः–हेतुतावच्छेदकसम्बन्धेन संयोगेनावृत्तेः। साध्यवदन्यत्वं च साध्यतावच्छेदकावच्छिन्नावच्छेदकताकसाध्यतावच्छेदकरूपपर्याप्तावच्छेदकतानिरूपितप्रतियोगिताकभेदवत्त्वमिति यावत्, तेन महानसीयवह्निनिष्ठप्रतियोगितावच्छेदकतायाः शुद्धवह्नित्वावच्छिन्नत्वेऽपि न हानिः—तादृशभेदस्य ह्रदादावेव सत्त्वात् तत्र च हेतोर्धूमस्यासत्त्वात्। नन्वथापि द्रव्यत्वाद्येकव्यक्तिसाध्यकेऽव्याप्तिः–द्रव्यभेदादिप्रतियोगितावच्छेदकताया निरवच्छिन्नत्वादिति चेत्, मैवं–साध्यादिभेदेन व्याप्तेर्भेदादेकव्यक्तिविशेषसाध्यके साध्यनिष्ठनिरवच्छिन्नावच्छेदकताकेत्यादेरन्यत्र साध्यतावच्छेदकावच्छिन्नावच्छेदकताकेत्यादेर्वाच्यत्वाददोषात्। साध्यवत्त्वं चात्र साध्यतावच्छेदकसम्बन्धेन बोध्यम्, तेन वह्निमान् धूमादित्यादौ समवायेन वह्निमदन्यस्मिन् पर्वतादौ धूमादेर्वृत्तावपि नाव्याप्तिरिति मन्तव्यम्। नन्वेवं सत्यपि जातिमान् सत्त्वात् द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः—जातिमदन्यस्मिन्सामान्यादौ हेतुतावच्छेदकसम्बन्धेन समवायेन वृत्तेरप्रसिद्धेः, द्वितीये साध्यवदन्यस्मिन् गुणे सत्ताभिन्नविशिष्टसत्तायाः सत्त्वाच्चेति चेत्, न–हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वीयविशेषणत्वस्य प्रतियोगितावच्छेदकसम्बन्धत्वे तेन साध्यवदन्यवृत्तित्वाभावस्य विवक्षणेनाद्यदोषाभावात्, सम्बन्धमध्ये हेतुतावच्छेदकावच्छिन्नत्वनिवेशेन द्वितीयेप्यदोषाच्चेति सङ्क्षेपः॥६८॥

ननु केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याप्रसिद्धत्वादव्याप्तिः, (१)किञ्च सत्तावान् जातेरित्यादौ साध्यवदन्यास्मिन्सामा-

(१) ननु केवलान्वयिन्यज्ञानकाले पक्षतात्मकसाध्यसंशयाभावेनानुमितिः तच्छून्यकाले तु भ्रमात्मकव्याप्तिज्ञानादनुमितिर्भवत्येवेत्यत आह किञ्चेति।

न्यादौ हेतुतावच्छेदकसंबन्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिरत आह—

अथवा हेतुमन्निष्ठाविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥

अथवेति । हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावः, तथा च हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते । अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः । न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम्, तत्तद्वह्न्यादेरप्युभयाभावसत्त्वादेकसत्त्वेऽपि द्वयं नास्तीतिप्रतीतेः, (१)गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च । तथापि प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति वाच्यम् । ननु रूपत्वव्याप्यजातिमत्त्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयः तासां च शुक्लत्वादिस्वरूपाणां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेत् । न । तत्र (२)परम्परया रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात्, न हि तादृशधर्मावच्छिन्नाऽभावः क्वापि पृथिव्यामस्ति—रूपत्वव्याप्यजातिमान्नास्तीति बुद्ध्यापत्तेः । साध्यादिभेदेन व्याप्तेर्भेदात्तादृशस्थले साध्यतावच्छेदकतावच्छेदकं प्रतियोगितावच्छेदकतानवच्छेदकमित्येव लक्षणघटकमित्यपि (३)वदन्ति । हेत्वधिकरणं च हेतुतावच्छेदकवि-

(१) ननु वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनाभावविशेषणान्नाव्याप्तिरत आह-गुणेति ।

(२) स्वाश्रयसमवायेन ।

(३) पूर्वोक्तरीत्या निर्वाहे साध्यतावच्छेदकतावच्छेदकधर्मिकप्रतियोगितावच्छेदकतानवच्छेदकत्वप्रकारकज्ञानस्य कारणतावच्छेदकगौरवाद्धेतुत्वं नोचितम् । न चैवं जातिमानित्येवानुमितिस्यान्न जातिमत्त्वानित्याकारेति वाच्यम्, पृथिवीत्वादिहेतुके जातिमानित्येवानुमित्याकारः जातिमत्त्वानित्याकारस्तु तद्व्यक्तित्वहेतुक इत्यदोषादित्यपि 'वदन्ती'त्यनेनास्वरसः सूचितः ।

शिष्टाधिकरणं वाच्यम्, तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः। एवं हेतुतावच्छेदकसम्बन्धेन हेत्वाधिकरणं बोध्यम्, तेन समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः। अभावश्च प्रतियोगिव्यधिकरणो बोध्यः, तेन कपिसंयोगी एतद्वृक्षत्वादित्यत्र मूलावच्छेदेनैव एतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाव्याप्तिः। न च प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनधिकरणवृत्तित्वं, तदा तथैवाव्याप्तिः—प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्तमानो योऽभावस्तस्यैव वृक्षे मूलावच्छेदेन सत्त्वात्। यदि तु प्रतियोग्यधिकरणावृत्तित्वं, तदा संयोगी सत्त्वादित्यादावतिव्याप्तिः—सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्याधिकरणद्रव्यवृत्तित्वादिति वाच्यम्। हेत्वाधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात्, स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः। प्रतियोग्यनधिकरणत्वं च प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वाच्यम्, तेन विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावस्य प्रतियोगिसमानाधिकरणत्वेऽपि (१)न क्षतिः। अत्र साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यम्, तेन ज्ञानवान् सत्त्वादित्यादौ सत्ताधिकरणघटादेर्विषयतया ज्ञानाधिकरणत्वेऽपि (२)न क्षतिः। इत्थं च वह्निमान् धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्त्वेऽपि (३)न क्षतिः। ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधि-

---

(१) नातिव्याप्तिः।

(२) नातिव्याप्तिः।

(३) न क्षतिः—नाव्याप्तिः। समवायेन वह्न्यभावस्य साध्यतावच्छेदकसंयोगेन प्रतियोग्यनाधिकरणहेत्वाधिकरणवृत्तित्वाभावादिति भावः।

करणत्वं तत्सामान्यस्य वा (१)यत्किञ्चित्प्रतियोगित्वावच्छेदकावच्छि-न्नानधिकरणत्वं वा विवक्षितम् । आद्ये कपिसंयोगी एतद्वृक्षत्वादि-त्यादौ तथैवाव्याप्तिः—कपिसंयोगाभावप्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसंयोगोऽपि भवति तदनाधिकरणं वृक्ष इति । द्वितीये तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः—सर्वस्यैवाभावस्य (२)पूर्वक्षणवृत्ति-त्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् । न च वह्निमान् धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियो-ग्यधिकरणत्वं यद्यपि पर्वतादेः, तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्र-तियोग्यनधिकरणत्वमस्त्येवेति कथं प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरि-ति वाच्यम् । घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया (३)घटा-भावस्य वह्निरपि प्रतियोगी तदधिकरणं च पर्वतादिरित्येवंक्रमेण प्रति-योगिव्यधिकरणस्याप्रसिद्धत्वात् । यदि च घटाभावादौ वह्न्यभावादि-र्भिन्न इत्युच्यते, तथापि धूमाभाववान् वह्न्यभावादित्यादा(४)वव्याप्तिः—तत्र साध्यतावच्छेदकसम्बन्धः, स्वरूपसम्बन्धः तेन सम्बन्धेन सर्वस्यै-वाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्व-धिकरणस्येति । तृतीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादाव-व्याप्तिः—तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुण-त्वात् तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिक-

(१) प्रतियोगितावच्छेदकविशिष्टत्वमित्यर्थः, वैशिष्ट्यञ्च स्वावच्छिन्नानधिकरणत्वसम्बन्धेनेति, तेन नाननुगमः ।

(२) पूर्वक्षणवृत्तित्वविशिष्टस्य स्वस्य घटाभावादेर्योऽभावस्तदात्मकेत्यर्थः । घटाभावाधिकरणे-पि पूर्वक्षणवृत्तित्वविशिष्टघटाभावादेरभावस्योत्तरक्षणावच्छेदेन सत्त्वादिति भावः । न च पूर्वक्षण-वृत्तित्वविशिष्टघटाभावादेरभावः स्वाभावस्य प्रतियोगी न घटाभावादेरिति वाच्यम् । तृतीयाभावस्य प्रथमाभावरूपतया पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावस्य योऽभावस्तदभावस्य पूर्वक्षणवृत्तित्ववि-शिष्टघटाभावानतिरेकितया विशिष्टघटाभावप्रतियोगिनस्तस्य शुद्धघटाभावप्रतियोगित्वात्तथा च प्रति-योगिव्यधिकरणाभावाप्रसिद्ध्याऽसम्भव इति ।

(३) अभावाधिकरणकाभावस्याधिकरणानतिरिक्तत्वादिति भावः ।

(४) 'इत्यादौ'त्यादिपदेनाभावसाध्यकसद्धेतुमात्रपरिग्रहः ।

रणत्वं हेत्वधिकरणस्यात्मन इति चेत् । मैवम् । (१)यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् । ननु कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः—हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामभावानां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणत्वात् । अत्र केचित् । महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणः—महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात्, महाकाले महाकालभेदाभावात् । (२)वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम् । ( व्यापकसामानाधिकरण्यं च व्याप्तिः । यत्संबन्धः साध्यतावच्छेदकसम्बन्धः यद्धर्मः साध्यतावच्छेदकधर्मः । तत्र यदि यद्धर्मावच्छिन्नाभावमात्रमित्युच्यते तदा समवायेन यो वह्न्यभावस्तस्य प्रतियोगितावच्छेदकसम्बन्धः समवायस्तेन प्रतियोग्यनधिकरणपर्वतादिवृत्तिः स एव, तत्प्रतियोगितावच्छेदकं वह्नित्वमित्यव्याप्तिः स्यात् । यदि च यत्सम्बन्धावच्छिन्नत्वाभावमात्रमित्युच्यते तदा तादृशस्य संयोगेन घटाभावस्य प्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वसत्त्वादव्याप्तिः स्यादत उभयमुपात्तम् । ) इत्थं च कालो घटवान् कालपरिमाणादित्यादौ संयोगसम्बन्धेन घटाभावप्रतियोगिनोऽपि घटस्यानधिकरणे हेत्वधिकरणे महाकाले

(१) तृतीयविवक्षानुसारेण समाधत्ते—यादृशेति । यादृश्याः प्रतियोगिताया अवच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितावच्छेदकतानाश्रयत्वमित्यर्थः ।

(२) ननु महाकालवृत्तिविशेषणतासम्बन्धेन साध्यतायां महाकालान्यत्वविशिष्टघटाभावोऽपि न प्रतियोगिव्यधिकरणः तत्र तेन सम्बन्धेन महाकालान्यत्वविशिष्टाधिकरणाप्रसिद्धेरत आह वस्तुतस्त्वित्यादिना ॥

वर्तमानः स एव संयोगेन घटाभावः, तस्य प्रतियोगितायां कालिकसम्बन्धवच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः । ननु प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धं गुरुधर्मस्यानवच्छेदकत्वादिति चेत् । न । कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादिति संक्षेपः ॥ ६९ ॥

अत्र इदं वाच्यं ज्ञेयत्वादित्यादौ साध्यवदन्यस्याऽप्रसिद्ध्याऽव्याप्तेर्नवीनोक्तं लक्षणमाह—अथवेति । हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽत्यन्ताभावः हेतुमन्निष्ठश्चासौ विरहश्च हेतुमन्निष्ठविरहस्तस्याप्रतियोगी हेतुमन्निष्ठविरहाप्रतियोगी तादृशेन साध्येन विधेयेन हेतोरनुमापकस्य ऐकाधिकरण्यं एकाधिकरणवृत्तित्वं व्याप्तिरित्यर्थः। वह्निमान् धूमादित्यादौ धूमवत्पर्वतादिनिष्ठघटात्यन्ताभावाप्रतियोगिवह्निसामानाधिकरण्यं धूमस्यास्तीति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ तु धूमस्य वह्निमदयोगोलकनिष्ठधूमाभावप्रतियोगित्वान्नातिव्याप्तिः । ननु वह्निमान् धूमादित्यादौ चालनीन्यायेनाव्याप्तिर्दुर्वारा पर्वतीयादिवह्नेर्महानसीयादिधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वादिति चेत्, न—प्रतियोग्यसमानाधिकरणयद्धेतुतावच्छेदकावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं तद्धेतुतावच्छेदकावच्छिन्ननिष्ठा तत्साध्यतावच्छेदकावच्छिन्ननिरूपिता व्याप्तिरित्यर्थे तात्पर्यात् । धूमत्वावच्छिन्नवति पर्वतादौ वह्नित्वावच्छिन्नप्रतियोगिताकाभावासत्त्वेन तथाविधघटाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छेदकत्वाद्वह्नित्वादेरिति वह्निमान् धूमादित्यादौ लक्षणसमन्वयः। वह्नित्वावच्छिन्नवत्ययोगोलकादौ धूमत्वावच्छिन्नाभावसत्त्वात् धूमत्वादेस्तथाविधप्रतियोगितानवच्छेदकत्वाभावेन धूमवान् वह्नेरित्यादौ नातिव्याप्तिः । अत्र कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणत्वमभावविशेषणम् । तच्च साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं, तदपि हेत्वधिकरणे बोध्यम्, तथाच साध्यतावच्छेदकसम्बन्धेन प्रतियोगिता-

वच्छेदकावच्छिन्नप्रतियोग्यसम्बन्धी यो हेतुमान् तन्निष्ठाभावेत्यर्थः। अत्र गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नेति। ज्ञानवान् द्रव्यत्वादित्यादौ समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धेनेति। वह्निमान् धूमादित्यादावव्याप्तिवारणायाभावे हेतुसामानाधिकरण्यनिवेशः। सामानाधिकरण्यमप्यत्र सम्बन्धित्वगर्भं ग्राह्यं न त्वधिकरणत्वगर्भितं तेन तादात्म्येन हेतुतानिर्वाह इत्यग्रे स्फुटीभविष्यति। तत्रापि धूमसाध्यके धूमवह्न्युभयहेतावव्याप्तिवारणाय हेतुतावच्छेदकावच्छिन्नत्वनिवेशः। पूर्वक्षणवृत्तित्वविशिष्टं वन्ह्यभावं वह्निघटोभयाद्यभावं चादायासम्भववारणाय साध्ये तथाविधाभावप्रतियोगित्वमपहाय तथाविधाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नत्वनिवेशः। साध्यतावच्छेदकेति विशेष्योपादानं तु धूमवान् वह्नेरित्यादौ धूमस्य तथाविधाभावप्रतियोगितानवच्छेदकप्रमेयत्वावच्छिन्नत्वमादायातिव्याप्तिवारणाय मन्तव्यम्। साध्यसामानाधिकरण्यमप्यत्र साध्यतावच्छेदकसम्बन्धेन यः साध्यसम्बन्धी तन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धित्वम्, अतः संयोगादिसम्बन्धेन वन्ह्यादेः साध्यतायां संयोगादिसम्बन्धेन धूमादिहेतौ कालिकादिसम्बन्धघटिततथाविधवह्निसामानाधिकरण्ये न व्याप्तिव्यवहारप्रसङ्गः, न वा तादात्म्यादिसम्बन्धस्याधिकरणत्वानिरूपकत्वेपि तादात्म्येन हेतुसाध्यभावे व्याप्त्यनुपपत्तिरिति। न चैवमपि सत्तादिनिष्ठतथाविधवह्निसामानाधिकरण्ये व्याप्तिव्यवहारप्रसङ्गो दुर्वार इति वाच्यम्, यद्धेतुतावच्छेदकावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यविशिष्टतद्धेतुतावच्छेदकं तद्धेतुतावच्छेदकावच्छिन्ने तत्साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिरिति लक्षणनिष्कर्षेणानुपपत्त्यभावात्। नन्वेवमपि दण्डिमान् दण्डसंयोगादित्यादिनानाव्यक्तिसाध्यतावच्छेदकस्थलेऽव्याप्तिः तत्तद्दण्डरूपसाध्यतावच्छेदके हेत्वधिकरणवृत्तितत्तद्दण्डविशिष्टाभावप्रतियोगितावच्छेदकत्वात्. हेत्वधिकरणे चालनीन्यायेन तत्तद्दण्डविशिष्टाभावसत्त्वादिति चेन्न, तत्र स्वाश्रयसंयोगित्वादिरूपपरम्परासम्बन्धेन दण्डत्वस्यैव साध्यतावच्छेदकत्वाङ्गीकारेणानुपपत्त्यभावात्। न चैवं सति दण्डत्ववद्वानित्येवा-

नुमितिः स्यान्न तु दण्डिमानिति वाच्यम्, तत्तद्दण्डे हेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वभ्रमो यावन्नास्ति तावन्न भवत्येव दण्डिमानित्याकाराऽनुमितिरित्यभ्युपगमाददोषात् । ननु कालो घटवान् कालपरिमाणादित्यादावव्याप्तिः—सर्वस्य साध्यतावच्छेदकसम्बन्धेन महाकालनिष्ठविशेषणतया महाकालवृत्तित्वान्निरुक्तप्रतियोग्यसमानाधिकरणाभावाप्रसिद्धेः । न च महाकालभेदविशिष्टघटाभाव एव तादृशः—महाकालस्य घटाद्यधिकरणत्वेपि महाकालभेदविशिष्टघटाद्यनधिकरणत्वात् महाकाले महाकालभेदाभावादिति वाच्यम्, महाकालस्य दैशिकविशेषणतया महाकालभेदानधिकरणत्वेपि कालिकविशेषणतयाऽधिकरणत्वात् इति चेन्न, प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणं यद्धेत्वधिकरणं तन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नं तद्धेतुतावच्छेदकावच्छिन्नव्यापकम्, व्यापकसामानाधिकरण्यं च व्याप्तिः, भवति हि समवायादिना घटत्वाद्यवच्छिन्नानधिकरणमहाकालपरिमाणाधिकरणमहाकालनिष्ठघटाद्यभावप्रतियोगितासामान्ये घटत्वाद्यवच्छिन्नत्वकालिकसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वात्कालिकसम्बन्धेन घटत्वाद्यवच्छिन्नं कालपरिमाणव्यापकं तत्सामानाधिकरण्यं च कालपरिमाण इति लक्षणसमन्वयः ॥

अवच्छेदकत्वं च नान्यूनवृत्तित्वम्—वह्निमान्धूमादित्यादौ तथाविधाभावप्रतियोगित्ववति घटादौ पटत्वादेरसत्त्वात् घटत्वादीनां सर्वेषामेतादृशप्रतियोगितान्यूनवृत्तितया तथाविधावच्छेदकाप्रसिद्धयाऽसम्भवापत्तेः । अत एव नानतिरिक्तवृत्तित्वम्—द्वित्वाद्यवच्छिन्नाभावमादाय सर्वेषामेव तथाविधप्रतियोगिताश्रयतया तदभावाप्रसिद्धया वह्निमान् धूमादित्यादावसम्भवापत्तेः । न च हेत्वधिकरणवृत्तियत्किञ्चिदभावप्रतियोगिताया अनतिरिक्तवृत्तित्वं तद्वाच्यम्, धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः घटत्वादिनिष्ठतादृशप्रतियोगितावच्छेदकताया धूमत्वेऽभावात् । किन्तु स्वरूपसम्बन्धविशेष एव तत् । न चैवं सति प्रमेय धूमवान् वह्नेरित्यादावतिव्याप्तिः—प्रमेयधूमत्वस्य समनियतधूमत्वापेक्षया गुरुतया धूमाभावप्रतियोगितानवच्छेदकतया हेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वादिति वाच्यम्, गुरु-

धर्मस्याभावप्रतियोगितावच्छेदकत्वाङ्गीकारे क्षतिविरहात्, अभावप्रतियोगितावच्छेदकताबुद्धिं प्रति गौरवज्ञानस्य प्रतिबन्धकत्वे मानाभावादित्याद्यन्यत्र विस्तरः।

वस्तुतः प्रतियोगिव्यधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति असम्बद्धं यद्धर्मविशिष्टसामान्यं तत्त्वं तथाविधावच्छेदकत्वम्, धूमवान् वह्नेरित्यादौ वन्ह्यधिकरणायोगोलकवृत्त्यभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नाभाववत्यसम्बद्धं धूमत्वविशिष्टसामान्यमिति धूमत्वे लक्षणसमन्वयः। एवं प्रमेयधूमत्वादावपि बोध्यम्। वह्निमान् धूमादित्यादौ तथाविधाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नाभाववति पर्वतादौ वह्नित्वविशिष्टस्य सम्बद्धत्वाद्वह्नित्वादौ नातिव्याप्तिः। प्रतियोगिवैयधिकरण्यं च साध्यतावच्छेदकसम्बन्धेन बोध्यम्, अन्यथा धूमवान् वह्नेरित्यादौ तथाविधधूमत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणे पर्वतादौ धूमत्वविशिष्टस्य सत्त्वेन धूमत्वेऽवच्छेदकलक्षणाऽव्याप्तिः स्यादित्यास्तां विस्तरः॥ ६९॥

पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह—

सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्॥ ७०॥

सिषाधयिषयेति। सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता, तद्वान्पक्ष इत्यर्थः। सिषाधयिषामात्रं न पक्षता—विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात्। (१)अत एव साध्यसन्देहोऽपि न पक्षता-विनापि सन्देहं तदनुमानात्। सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव, अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम्। तथाच यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां (२)सत्यामसत्यामपि

(१) वक्ष्यमाणदोषादेव।

(२) सत्यामुभयाभावप्रयुक्तस्य, असत्यां विशेष्याभावमात्रप्रयुक्तस्योक्तविशिष्टाभावस्य सत्त्वादिति भावः। सिद्धौ सत्यामिति। सत्यां विशेषणाभावमात्रप्रयुक्तस्यासत्यां तूभयाभावप्रयुक्तस्य सत्त्वादिति भावः।

पक्षता, यत्र सिषाधयिषास्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता, यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता, सिषाधयिषा-विरहविशिष्टसिद्धेः सत्त्वात् । ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सि-षाधयिषा तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः, यत्र सिद्धिपरा-मर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रति-बन्धकाभावादेवानुमितिः, यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परा-मर्शकाले सिषाधयिषैव नास्ति, एवमन्यत्रापि सिद्धिकाले परामर्शकाले वा न सिषाधयिषा—योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्, तत्कथं सिषा-धयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेत् । न । यत्र वह्निव्याप्य-धूमवान् पर्वतो वह्निमानिति प्रत्यक्षं स्मरणं वा ततः सिषाधयिषा तत्र पक्षतासंपत्तये तद्विशेषणस्यावश्यकत्वात् ।

अत्रेदं बोध्यम् । यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लि-ङ्गकानुमितौ पक्षता । तेन सिद्धिपरामर्शसत्त्वेऽपि यत्कि-ञ्चिज्ज्ञानं जायतामितीच्छायामपि नानुमितिः । वह्निव्याप्यधूम-वान् पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छायां तु भवत्येव । एवं धूमपरामर्शसत्त्वे आलोकेन वह्नि-मनुमिनुयामितीच्छायामपि नानुमितिः । सिषाधयिषाविरहकाले यादृश-सिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्यैव तत्तदनुमितौ प्रतिबन्धि-का वक्तव्या, तेन पर्वतस्तेजस्वी पाषाणमयो वह्निमानिति ज्ञानसत्त्वे-ऽप्यनुमितेर्न विरोधः । परन्तु पक्षतावच्छेदकसामानाधिकरण्येन सा-ध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात्पक्षतावच्छेदकावच्छेदेनानु-मितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका । पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि ।

(१)इदं तु बोध्यम्। यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्यकरादिमानयमिति ज्ञानं तत्रासत्यामनुमित्सायां पुरुषस्य प्रत्यक्षं भवति न त्वनुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनीजिज्ञासादिवत्स्वातन्त्र्येण(२) प्रतिबन्धिका। एवं परामर्शानन्तरं विना प्रत्यक्षेच्छां पक्षादेः प्रत्यक्षानुत्पत्तेः, प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका ॥ ७० ॥

व्याप्यस्य पक्षवृत्तित्वज्ञानं परामर्श इत्युक्तम् तत्र व्याप्येत्यंश उक्तः। पक्षधर्मता तु पक्षेण सह सम्बन्धः, पक्षः—पक्षत्ववान्, पक्षत्वं च साध्यसन्देह इति प्राचीनाः। तन्न सम्यक्। श्रवणानन्तरं मनने प्रवृत्तिर्न स्यात्, श्रवणेनात्मनो निश्चितत्वादित्यभिप्रेत्य नवीनोक्तं लक्षणमाह—सिषाधयिषेति। साधयितुमनुमापयितुमिच्छा सिषाधयिषा—अनुमित्सा—धूमादिहेतुना वह्निमनुमिनुयामितीच्छा, तया शून्या रहिता सिद्धिः साध्यनिश्चयः यत्र हेतुमति पर्वतादौ न तिष्ठति स धर्म्मो पर्वतादिपदार्थः पक्ष इत्यर्थः। सिषाधयिषाभावेन विशिष्टस्य साध्यनिश्चयस्याभावः पक्षतेति यावत्। तत्र साध्यनिश्चयस्याभावः पक्षतेत्युक्ते साध्यनिश्चयस्य सत्त्वेऽप्यनुमितिर्जायतामितीच्छायां सत्यामनुमितिर्न स्यात् प्रतिबन्धकस्य साध्यनिश्चयस्य सत्त्वात् तदभावरूपपक्षतायाअभावात् अत उक्तं सिषाधयिषया शून्येति। सिषाधयिषैव पक्षतेत्युक्ते सिषाधयिषाया असत्त्वे साध्यनिश्चयस्य चासत्त्वे वह्निव्याप्यधूमवानयमिति परामर्शसत्त्वे चानुमितिर्न स्यात्—सिषाधयिषारूपपक्षताया अभावात्, तस्माच्च साध्यनिश्चयस्याभावमात्रं पक्षता न वा सिषाधयिषामात्रम्, किन्तूक्त एवाभावः। सोऽपि चानुमितौ परामर्शवत्स्वतन्त्रकारणं यथोत्तेजकाभावेन सहकृतस्य

(१) उपाध्यायास्तु सिषाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षता। तेन सिद्धिकाले समानविषयकप्रत्यक्षसामग्रीकालेऽपि च नानुमित्यापत्तिरित्याहुः। तद्दूषयितुं प्रत्यक्षसामग्र्यभावस्य पक्षताकुक्ष्यप्रवेशे प्रत्यक्षसामग्रीकाले कथं नानुमितिरित्युत्कटशिष्यजिज्ञासानुत्पादार्थं प्रथमतः स्वसिद्धान्तमाह—इदं तु बोध्यमित्यादिना। संशयोत्तरप्रत्यक्षं प्रति हेतुभूतविशेषदर्शनस्य सत्त्वादिति भावः। एतादृशप्रत्यक्षसामग्रीविशेषपर्यन्तानुधावनं च तद्विषये अनुमितिसामग्रीसंपत्तिदर्शनार्थं स्वातंत्र्येणानुमितिसामग्रीप्रदर्शने प्रयासापत्तेः।

(२) पक्षताकुक्ष्यप्रविष्टत्वेनेत्यर्थः।

मणेरभावो दाहं प्रति, प्रतिबन्धकाभावस्य कार्यं प्रति स्वतन्त्रकारणत्वदर्शनात्। स चाभावो यत्र सिषाधयिषासिद्धी तत्रानुमित्सा-विरहरूपविशेषणाभावात्, यत्रानुमित्सासिद्ध्यभावौ तत्रोभयाभावात्, यत्र सिषाधयिषाभावः सिद्धेश्चाभावस्तत्र विशेष्याभावात्। तत्र विशेषणाभावेन विशिष्टाभावो यथा दण्डाभावेन दण्डी नास्तीति, उभयाभावेन यथा दण्डपुरुषोभयाभावेन दण्डी नास्तीति, विशेष्याभावेन यथा दण्डसत्त्वेपि पुरुषस्याभावेन दण्डी नास्तीति। तस्माद्विशेषणाभावाद्विशेष्याभावस्य विशेष्याभावाद्विशेषणाभावस्य चानुभवसिद्धत्वान्न साध्यनिश्चयसत्त्वेपि पक्षताया अनुपपत्तिरिति भावः॥

पक्षतासम्पत्तिफलमाह–तत्र वृत्तित्वेति। पक्षवृत्तित्वावगाहिज्ञानादित्यर्थः, तेन न केवलव्याप्तिज्ञानादनुमितिप्रसङ्ग इति भावः। ननु पक्षवृत्तित्वावगाहिज्ञानं कथं कारणमुच्यते? वह्निव्याप्यधूमवान्पर्वत इत्यस्यासङ्ग्रहात् तत्राधेयताया भाने मानाभावादिति चेत्। न-व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं कारणमित्यर्थे तात्पर्येणादोषात्।

केचित्तु दृष्टान्तेऽनुमित्यापत्तिवारणायाह–तत्रेति। तथाच व्याप्यत्वेन रूपेण पक्षताविशिष्टे हेतुमत्तानिश्चयस्यैवानुमितिहेतुत्वात् महानसादौ तदभावादेव नानुमितिरिति वदन्ति। तन्न सम्यक्–तथा सति पक्षतायाः परामर्शकुक्षिक्षेपापत्त्या कारणतावच्छेदकत्वापत्त्या कारणत्वानुपपत्तेः अतस्तत्र पक्षताविरहादेवानुमितेर्वारणीयत्वात्पक्षधर्मताज्ञानविरहादित्यसङ्गतम्। ननु लाघवाद्व्याप्यतावच्छेदकप्रकारकव्याप्तिधीपक्षताज्ञानयोरेव धूमो वह्निव्याप्यो धूमवान् पर्वत इत्याकारयोरनुमितिम्प्रति हेतुत्वमुपेयताम्, अलं विशिष्टवैशिष्ट्यावगाहिज्ञानेन तत्तद्ध्वंसप्रागभावादिकल्पने गौरवादिति चेत्, मैवम्–वह्निव्याप्यवानिति निर्द्धर्मितावच्छेदकशाब्दपरामर्शादप्यनुमितिदर्शनेन लाघवाद्विशिष्टवैशिष्ट्यावगाहिज्ञानत्वरूपलघ्वेकधर्मावच्छेदेन कारणत्वे सिद्धे अन्यत्र तत्तद्ध्वंसादिकल्पनागौरवस्य फलमुखत्वेनादुष्टत्वादित्याद्यन्यत्र विस्तरः॥ ७०॥

हेतुप्रसङ्गाद्धेत्वाभासान्विभजते—

अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा॥ ७१॥

अनेकान्त इति । (१)तल्लक्षणं तु यद्विषयकत्वेन ज्ञानस्यानुमिति विरोधित्वं तत्त्वम् । तथाहि–व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमिति-विरोधित्वात्ते(२)दोषाः । यद्विषयकत्वं च यादृशविशिष्टविषयकत्वम्(३) तेन बाधभ्रमस्यानुमितिविरोधित्वेऽपि न क्षतिः । तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः । (४)न च वह्न्यभावव्याप्य-पाषाणमयत्ववानितिपरामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात्तत्र वह्न्यभावव्याप्यवान्पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम्, (५)इष्टापत्तेः, (६)अन्यथा बाधस्याप्यनित्यदोषत्वापत्तेः(७) । तस्मा-त्तत्र वह्न्यभावव्याप्यपाषाणमयत्ववानितिपरामर्शकाले वह्निव्याप्य-धूमस्य नाभासत्वम्, भ्रमादनुमितिप्रतिबन्धमात्रं, हेतुस्तु न दुष्टः । इत्थं च साध्याभाववद्वृत्तिहेत्वादिकं दोषः । तद्वत्त्वं च हेतौ येन केनापि सम्बन्धेनेति नव्याः ।

(८)परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वा-भासत्वम्, सत्प्रतिपक्षे विरोधिव्याप्त्यादिकमेव तथा, तद्वत्त्वं च हेतोर्ज्ञानरूपसंबन्धेन । न चैवं वह्निमान् धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वाज्ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि

(१) ननु लक्षणात्मकसाधारणधर्मज्ञानं विना विशेषे जिज्ञासानुदयाद्विभागोऽनुपपन्न इत्यतो लक्षणमाह तल्लक्षणं त्विति । हेत्वाभासलक्षणं त्वित्यर्थः । हेतोराभासा इति व्युत्पत्त्या हेतुदोषलक्षणमिति यावत् । यद्यपि दुष्टहेतूनामेव अनैकान्त इत्यादिना विभजनाद् दुष्टहेतुलक्षण-मेव वक्तव्यम् तथापि दोषज्ञाने जाते दोषवत्त्वरूपदुष्टलक्षणस्य ज्ञातुं शक्यत्वाददोषः ॥

(२) व्यभिचारादयः ।

(३) यद्रूपावच्छिन्नविषयकत्वमित्यर्थः ।

(४) सत्प्रतिपक्षस्यानित्यदोषत्ववादिमतमाशङ्क्य निराकरोति–नचेति । विशिष्टस्याप्रसि-द्धत्वादिति । पाषाणमयत्वे वह्न्यभावव्याप्यत्वाभावादिति भावः ।

(५) इष्टापत्तेरिति । तथा च सद्धेतुना प्रतिमरापर्शेऽपि न दुष्टत्वमिति भावः ।

(६) अन्यथेति । प्रतिबन्धकीभूतभ्रमाविषयस्यापि दोषत्व इत्यर्थः ।

(७) पक्षे साध्याभावभ्रमशायां सद्धेतावपि दोषत्वापत्तेरिति भावः ।

(८) सत्प्रतिपक्षादेरनित्यदोषत्ववादिना मतमाह परे त्विति ।

सत्त्वात्सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यम्, तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात्, अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात्, तत्र बाधित इति व्यवहाराभावादित्याहुः ।

अनुमितिविरोधित्वं च अनुमितितत्करणान्यतरविरोधित्वम् । तेन व्यभिचारिणि नाव्याप्तिः । दोषज्ञानं च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकं तेनैकहेतौ व्यभिचारज्ञाने हेत्वन्तरेणानुमित्युत्पत्तेः, तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः ।

(१) यादृशसाध्यपक्षहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम् । पञ्चत्वकथनन्तु तत्सम्भवस्थलाभिप्रायेण(२) ।

एवञ्च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम् । साधारणः साध्यवदन्यवृत्तिः, तेन च व्याप्तिज्ञानप्रतिबन्धः क्रियते । असाधारणः साध्यासमानाधिकरणो हेतुः, तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते । ( यथा शब्दो नित्यः शब्दत्वादित्यादावसाधारण्यं शब्दोऽनित्यः शब्दत्वादित्यादौ त्वसाधारण्यभ्रमः ) अन्ये तु सपक्षावृत्तिरसाधारणः । सपक्षश्च निश्चितसाध्यवान् । इत्थञ्च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यं—तत्र हेतोर्निश्चयादिति वदन्ति । अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः, अनेन व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते ।

विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी, अयं साध्याभावप्र-

---

(१) नन्वत्र तद्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकतद्धर्मावच्छिन्नहेतुकानुमितितत्करणान्यतरविरोधित्वं लक्षणे निवेशनीयं अन्यथा पर्वतो वह्निमान् धूमादित्यादौ पर्वतादेः काञ्चनमयत्वाभावो हेत्वाभासः स्यात्, एवं च निर्वह्निः पर्वतो वह्निमान्धूमादित्यादौ तादृशानुमित्यप्रसिद्ध्या न कोपि हेत्वाभासः स्यादत आह—यादृशसाध्येति ।

(२) वायुर्गन्धवान् स्नेहादित्यादौ सर्वहेत्वाभाससंभव इति भावः ।

हसामग्रीत्वेन प्रतिबन्धकः। सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभावसाधकः, अत्र तु हेतुरेवेति विशेषः। साध्याभावसाधक एव साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः।

सत्प्रतिपक्षः साध्याभावव्याप्यवान्पक्षः। अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितिकालीनागृहीताप्रामाण्यकतदभावव्याप्यवत्त्वोपस्थितिविषयस्तथेत्यन्ये। अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम्। (१)अत्र केचित्—यथा घटाभावव्याप्यवत्ताज्ञानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते; यथा च शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीर्जायते; एवं कोटिद्वयव्याप्यदर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति; तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव। यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः। फलबलेन चाधिकसमबलभावः कल्प्यत(२) इति वदन्ति—तन्न। तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयाल्लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता—लाघवात्, न तूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता—गौरवात्। तथाच प्रतिबन्धकसत्त्वात्कथमनुमितिः(३)? नहि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामाणिकी येनानुमितिभिन्नत्वेनापि विशेषणीयम्।

---

(१) सत्प्रतिपक्षस्य संशयजनकत्वं दूषकताबीजं न त्वनुमितिप्रतिबन्धकत्वं तदभावव्याप्यवत्ताज्ञानस्यानुमितिप्रतिबन्धकत्वे मानाभावादिति रत्नकोशकारमतं दूषयितुमुपन्यस्यति—अत्र केचिदित्यादिना।

(२) तथा च तत्र पीतत्वसाक्षात्कारस्यैवानुभविकतया शुक्लत्वग्रहेऽपि पित्तरूपदोषस्य प्रतिबन्धकत्वं कल्पयित्वा पीतत्वादिसाक्षात्कारसामग्र्या अधिकबलत्वमेवं दूरत्वदोषे सत्यपि स्थाणुत्वपुरुषत्वयोः स्मृतौ संशयस्यैवोदयात्तत्सामग्र्याः समबलवत्त्वमेव कल्प्यत इति भावः।

(३) अनुमितेरपि तत्प्रतिबध्यतावच्छेदकाक्रान्तत्वादिति भावः।

(१)यत्र च कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात्संशयो नान्यथा—(२)अगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति।

असिद्धिस्त्वाश्रयासिद्ध्याद्यन्यतमत्वम् । आश्रयासिद्धिः—पक्षे पक्षतावच्छेदकस्याभावः। यत्र च काञ्चनमयः पर्वतो वह्निमानिति साध्यते तत्र पर्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमयपर्वते परामर्शप्रतिबन्धः फलम् । स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः । तत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम् । साध्याप्रसिद्ध्यादयस्तु व्याप्यत्वासिद्धिमध्येऽन्तर्भूताः । साध्ये साध्यतावच्छेदकस्याभावः साध्याप्रसिद्धिः, एतज्ज्ञाने जाते काञ्चनमयवह्निमानित्यादौ साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम् । एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः, यथा काञ्चनमयधूमादित्यादौ, अत्र हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम् । एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वस्य हेतुतानवच्छेदकत्वमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति ।

बाधस्तु पक्षे साध्याभावादिः । एतस्यानुमितिप्रतिबन्धः फलम् । तद्धर्मिकतदभावनिश्चयो लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतज्ज्ञानमात्रे विरोधीति। (३)न तु तत्र संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणं, तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तम्—अप्रसिद्धसाध्यकानुमित्यनापत्तेः, (४)साध्यसंश-

(१) कथं तर्ह्युभयव्याप्यवत्तानिश्चयात् प्रात्यक्षिकः संशय इत्याशङ्क्य न भवत्येव तावद्यापत्तन्निश्चये प्रामाण्यं न गृह्यत इत्याह—यत्र चेति ।

(२) अनुमितिप्रतिबंधपक्षे तु न प्रामाण्यग्रहापेक्षेत्यभिप्रेत्याह अगृहीताप्रामाण्यकस्यैवेति ।

(३)कस्यचिन्मतं दूषयति—नत्विति । इति युक्तमित्यनेनान्वयः ।

(४) ननु अप्रसिद्धसाध्यकानुमितिः कुत्रापि न भवत्येवेत्यत आह साध्यसंशयेति ।

यादिकं विनाप्यनुमित्युत्पत्तेश्च । एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं–प्रमाणाभावाद्गौरवाच्च । अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः । किन्तु भ्रमत्वज्ञानानास्कन्दितबाधादिबुद्धेः प्रतिबन्धकता तत्र भ्रमत्वशङ्काविघटनेन प्रामाण्यज्ञानं क्वचिदुपयुज्यते । न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः, पक्षे हेत्वभावे स्वरूपासिद्धिरेव दोष इति वाच्यम्, बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात् । किञ्च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिञ्चित्करत्वाद्बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम् । एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यम् । न च पक्षे घटे गन्धसत्त्वात्कथं बाध इति वाच्यम्, पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति । बाधतद्व्याप्यभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति । अन्यथा हेत्वाभासाधिक्यप्रसङ्गात् । बाधव्याप्यसत्प्रतिपक्षो भिन्न एव स्वतन्त्रेच्छेन मुनिना पृथगुपदेशात् । सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः ॥ ७१ ॥

एवं सद्धेतुं निरूप्यासद्धेतुभूतान् हेत्वाभासान् निरूपयितुं विभजते–अनैकान्तो विरुद्धश्चेत्यादि । हेतुवदाभासते न हेतुरिति हेतुभिन्नो हेतुवद्भासमानो हेत्वाभासः । अथवा हेतोराभासः इति हेतुदोषो वा हेत्वाभासः । पञ्चधा–पञ्चप्रकारो भवति । के ते पञ्च? तत्राह–अनैकान्तेति । एकान्ते नियमे भव एकान्तः नियत इति यावत्, तदन्योऽनैकान्तो–व्यभिचारी–साध्यवदन्यवृत्तिः साध्यासमानाधिकरणः साध्यसन्देहवांश्चेति यावत् । विरुद्धः–साध्यविरोधवान्–साध्यविपरीतेन साध्याभावेन सह वर्त्तमान इति यावत् । असिद्धः पक्षेऽनिश्चितः, पक्षश्चानिश्चितः । प्रतिपक्षकः–प्रति विपरीतः पक्षः कोट्यन्तरं यस्य स प्रतिपक्षक इत्यर्थः । साध्याभावसाधकः प्रतिहेतुरिति यावत् । कालात्ययापदिष्टः–कालस्य साधनसमयस्यात्ययेऽभावेऽपदिश्यते प्रयुज्यते इत्यपदिष्टः कालातीत इति यावत् । साध्या-

भावनिर्णयो न यस्मिन् समये स साध्यसाधनकालस्तस्मिन्समये प्रयुक्तो हेतुर्भवति, यस्तु तादृशकाले नातीतः स कालात्ययापदिष्टसंज्ञकः बाधितसाध्यक इति यावत् ॥ ७१ ॥

आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।
तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत् ॥ ७२ ॥

तत्रानैकान्तशब्दोक्तं व्यभिचारिणं लक्षयति—आद्यः साधारणश्च स्यादिति । त्रिधा—त्रिप्रकार इत्यर्थः । के ते त्रयस्तत्राह—आद्यः साधारणश्चेति । एकः साधारण इत्यादिरर्थः ॥ ७२ ॥

यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।

यः सपक्ष इति । सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षः—निश्चितसाध्यवान् । विपक्षः—साध्यवद्भिन्नः । विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम् । वस्तुतो विपक्षवृत्तित्वमेव वाच्यम्, विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य भिन्नतया तस्य पार्थक्यात् ॥

यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मतः ॥ ७३ ॥

साधारणं लक्षयति—यः सपक्षे विपक्षे चेति । यः हेतुत्वेन प्रयुक्तः सपक्षे निश्चितसाध्यवति विपक्षे निश्चितसाध्याभाववति च वर्तते साध्यवद्वृत्तित्वे सति साध्यवदन्यवृत्तिरिति यावत्—भवेत्साधारणस्तु सः।

यस्तूभयस्मादिति । सपक्षविपक्षव्यावृत्त इत्यर्थः । सपक्षः—साध्यवत्तया निश्चितः । विपक्षः—साध्यशून्यतया निश्चितः । शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वस्य सन्देहस्तदा सपक्षत्वं विपक्षत्वं च घटादीनामेव तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् । यदा तु शब्देऽनित्यत्वानिश्चयस्तदा नासाधारण्यम् । इदं तु प्राचां मतम् । नवीनमतं तु पूर्वमुक्तम् ॥ ७२ ॥ ७३ ॥

असाधारणमाह—यस्तूभयस्मादिति । यः हेतुत्वेन प्रयुक्तः उभयस्मात् सपक्षविपक्षोभयात् व्यावृत्तो रहितः—निश्चितसाध्यवति सपक्षे निश्चितसाध्याभाववति विपक्षे च न वर्त्तते किन्तु पक्षमात्रे वर्त्तते

सत्त्वसाधारणो मतः—स एवासाधारणानैकान्तो, न तु विरुद्धः—पक्षवृत्तित्वाभावात्, नापि साधारणः—विपक्षवृत्तित्वाभावादित्यर्थः ॥७३॥

तथैवानुपसंहारी केवलान्वयिपक्षकः(१) ।

तथैवेति । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात्सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः । इदं तु न सम्यक्—पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् । अस्तु वा सहचाराग्रहस्तावता-प्यज्ञानरूपासिद्धिरेव, न तु हेत्वाभासत्वं तस्य, तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् ॥

अनुपसंहारिणमाह—केवलान्वयिना सप्तपदार्थेषु विद्यमानेन धर्म्मेण पक्षो यस्य स केवलान्वयिपक्षकः केवलान्वयिधर्म्मावच्छिन्न-पक्षक इति यावत् ॥

(२)पर्वतो वह्निमान् सत्त्वादिति तत्रादिमो भवेत् ॥
पृथ्वी नित्या गन्धवत्त्वादिति स्यादपरस्तथा ॥
सर्वं तुच्छं प्रमेयत्वादिति तत्रान्तिमो भवेत् ॥

अयं क्रमेणोदाहरति-पर्वतो वह्निमानित्यादि । आदिमः—साधारणानैकान्तिकः पक्षे पर्वते विद्यमानस्य सत्त्वस्य सत्ताजातेर्हेतोः सपक्षे निश्चितवह्निमति महानसे विपक्षे निश्चितवह्न्यभाववति जलह्रदे च विद्यमानत्वादिति भावः । अपरः—असाधारणः गन्धवत्त्वस्य हेतोः पृथिव्यसाधारणस्य सपक्षे निश्चितानत्यत्ववति कालादौ विपक्षे निश्चितनित्यत्वाभाववति जलह्रदादौ चाविद्यमानत्वादिति भावः । अन्तिमः—अनुपसंहारी । अत्र हि सर्वं पक्षः सर्वत्वं पक्षतावच्छेदकं तच्च केवलान्वयि सप्तपदार्थधर्म्मत्वात् एतद्विशिष्टं च सर्वमेव पक्षस्तत्र च साध्यसन्देह एवास्ति अन्यच्च व्याप्तिनि-

(१) पक्षेति भावप्रधानो निर्देशः । तेन आकाशाभावादिपक्षकसद्धेतौ नातिप्रसङ्गः । अत्र पक्षता साध्यसंशयरूपा ग्राह्या । तेन सर्वमभिधेयं प्रमेयत्वादित्यादौ यदा सिद्धिः सिषाधयिषा च तदा साध्यनिश्चयसंभवेन सामानाधिकरण्यघटितव्याप्तिग्रहसंभवात् तस्य सद्धेतोरलक्ष्यतया सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षत्वस्य. तदा केवलान्वयित्वेऽपि तत्र नातिव्याप्तिः ।

(२) अत्रोदाहरणकारिकाः मध्ये चन्द्रिकाकारेणोपक्षिप्ताः ।

स्थलं नास्त्येवातो व्याप्तिग्रहो न सम्भवत्येवेति भावः । एतत्त्रयमपि व्याप्तिग्रहप्रतिबन्धकत्वेन हेत्वाभास इति भावः ॥

परे तु विपक्षवृत्तित्वमेव साधारणत्वं तावन्मात्रस्यैव दूषकत्वात्, विरुद्धस्यापि विरुद्धत्वाज्ञाने विपक्षवृत्तिताज्ञानदशायां साधारणत्वमेव, अन्यथा तस्य हेत्वाभासान्तरतापत्तेः । एवं सर्वसपक्षव्यावृत्तत्वमेवासाधारणत्वं न तु विपक्षव्यावृत्तत्वमपि-व्यर्थविशेषणत्वात्, अनेनोपाधिना विरुद्धमप्यसाधारणमेव, अन्यथा विरुद्धत्वाज्ञाने सर्वसपक्षव्यावृत्तत्वे च ज्ञाते हेत्वाभासान्तरतापत्तेः । एवं न केवलान्वयिधर्मावच्छिन्नपक्षकत्वमनुपसंहारित्वं—केवलान्वयिसाध्यकस्य तादृशस्य सद्धेतुत्वात्, किन्त्वन्वयव्यतिरेकदृष्टान्तरहितत्वं तत्त्वमिति वदन्ति ॥

यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४ ॥

यः साध्यवतीति । एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः । तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥ ७४ ॥

तत्र विरुद्धस्य साध्याभावव्याप्तत्वे संयोगादिसाध्यकसद्धेतावतिव्याप्तेः स्वयं लक्षयति—यः साध्यवतीति । यः हेतुत्वेनाभिमतः साध्याधिकरणे नैवास्ति न वर्तते साध्यसहचरितात्यन्ताभावप्रतियोगीति यावत् ॥ ७४ ॥

गोत्वादिसाध्ये हेतुर्हि यत्राश्वत्वादिको भवेत् ॥

उदाहरति—गोत्वादीति । यत्र यस्मिन् गोत्वादिसाध्यकानुमाने अश्वत्वादिजातिर्हेतुर्भवति तत्र हेतुर्विरुद्ध इत्यर्थः । यतो गोत्वरूपसाध्यवति अश्वत्वं नैवास्ति । आदिना वह्निमान् ह्रदत्वादित्यादिपरिग्रहः । वस्तुत इदमपि लक्षणं द्रव्यं संयोगादित्यादावतिव्याप्तं—संयोगस्याव्याप्यवृत्तितया द्रव्यत्वसहचरितात्यन्ताभावप्रतियोगित्वात्, अतः साध्यासमानाधिकरणसाध्याभावव्याप्त इत्येव लक्षणं युक्तम् । संयोगादिसाध्यकसद्धेतावतिव्याप्तिवारणायासमानाधिकरणान्तम् । अक्षरार्थस्तु—साध्यवति साध्याधिकरणे नैवास्ति कदापि न तिष्ठति किन्तु साध्याभाववत्येव तिष्ठति साध्यासमानाधिकरणसाध्याभावव्याप्त इति यावत् । एतस्य साध्याभावानुमितिसामग्रीत्वेन साध्यानु-

मितिप्रतिबन्धो दूषकताबीजम् । न च साध्यहेत्वोर्विरोधे पक्षे साध्यसत्त्वे हेत्वसिद्धिर्हेतुसत्त्वे साध्याभावसिद्धौ बाध एव दोष इति वाच्यम्, प्रमाणान्तरेण साध्याभावसिद्धावेव बाधस्य दोषत्वात् अत्र तु तेनैव विशेषात् ॥

असिद्धिं विभजते—

आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ ।
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥

आश्रयासिद्धिरित्यादि ॥ ७५ ॥

असिद्धं असिद्धिनिरूपणेन निरूपयति—आश्रयासिद्धिरिति । आश्रयस्य-पक्षस्यासिद्धिरभावोऽज्ञानं वा आद्या एका। स्वरूपासिद्धिः—स्वरूपस्य हेतोः पक्षेऽभावः। व्याप्यत्वासिद्धिः व्याप्यत्वस्य व्याप्तेरभावः । अपरा—तृतीया ॥ ७५ ॥

पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।
ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥

पक्षासिद्धिरिति । आश्रयासिद्धिरित्यर्थः। अपरेति । स्वरूपासिद्धिरित्यर्थः ॥ ७६ ॥

उदाहरति—पक्षासिद्धिरिति। मणिमयः पर्वतो वह्निमानित्यादावि-त्यर्थः । अत्र मणिप्रचुरः पर्वतः पक्षः स च नास्त्येव न वा ज्ञायते, तस्मादत्र हेतोः पक्षवृत्तित्वज्ञानासम्भवात्पक्षे साध्यज्ञानासम्भवाच्च पक्षधर्मताज्ञानस्य साध्यानुमितेश्च प्रतिबन्धकत्वेन हेत्वाभासत्वमिति ।

स्वरूपासिद्धिमुदाहरति—ह्रदो द्रव्यमिति। अपरा—स्वरूपासिद्धिः। अत्र धूमवत्त्वं हेतुः स च ह्रदे पक्षे नास्त्येवेति स्वरूपस्य हेतोरभावात् स्वरूपासिद्धिः पक्षे हेतुसम्बन्धज्ञानरूपपरामर्शे प्रतिबन्धकत्वाद्धेत्वाभास इति भावः ॥ ७६ ॥

व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।

नीलधूमादिक इति । नीलधूमत्वादिकं गुरुतया न हेतुतावच्छे-

दकं (१)स्वसमानाधिकरण–व्याप्यतावच्छेदक–धर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात् । (२)धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति ॥

व्याप्यत्वासिद्धिमुदाहरति–व्याप्यत्वासिद्धिरिति । अपरा तृतीया । दर्शयति–नीलधूमेति । पर्वतो वह्निमान् नीलधूमादित्यादौ धूमस्यैव वह्निव्याप्यत्वसम्भवेन नीलविशेषणस्य व्यभिचारावारकत्वेन व्यर्थतया नीलधूमादेर्व्याप्यत्वासिद्धत्वादिति भावः । नन्वधिकोक्तया व्यर्थविशेषणत्वस्य निग्रहस्थानमात्रसम्पादकतया नीलधूमादौ व्यर्थविशेषणत्वसत्त्वेऽपि व्याप्तिसत्त्वेन कथं व्याप्यत्वासिद्धिरिति चेत् । न–धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वापेक्षया नीलधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य गुरुतया तदवच्छिन्नप्रतियोगिताकाभावघटितव्याप्तेरभावादित्यवेहि । प्राचीनैर्गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वानभ्युपगमादित्यास्तां विस्तरः । आदिना पर्वतः काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यत्र साध्ये साध्यतावच्छेदकस्य साधने साधनतावच्छेदकस्याभावेन साध्यसाधनयोरप्रसिद्धिरपि व्याप्यत्वासिद्धिरिति ज्ञापितम् । एतज्ज्ञानं व्याप्तिज्ञानप्रतिबन्धकम् । अयं च हेत्वाभासो गौतमीयेषु सूत्रेषु साध्यसमसंज्ञयोक्तः पक्षहेतुतावच्छेदकानां साध्यवत्साधनीयत्वेन साध्याविशेषादिति सङ्क्षेपः ॥

विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥

विरुद्धयोरिति । कपिसंयोगतदभावव्याप्यवत्तापरामर्शेऽपि न सत्प्रतिपक्षितत्वमत उक्तं–विरुद्धयोरिति । तथाच स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः ॥७७॥

सत्प्रतिपक्षं लक्षयति–विरुद्धयोरिति । विरुद्धयोः साध्यवत्त्वसाध्याभाववत्त्वसाधकयोर्हेत्वोः व्याप्तिविशिष्टतया गृहीतयोः परामर्शः

(१) स्वपदं व्याप्यतावच्छेदकत्वेनाभिमतपरम् ।

(२) धूमप्रागभावत्वेति । तस्य व्याप्यतावच्छेदकीभूतधूमघटितत्वेन तत्संग्रहो न स्यादिति भावः । स्वस्य स्वाविषयकप्रतीतिविषयत्वरूपस्वाघटितत्वाभावाद्धर्मान्तरेति ।

पक्षेन सह सम्बन्धज्ञानं सत्प्रतिपक्षता विरोधित्वम् , तथाच परस्परविरुद्धसाध्यकत्वेन विरुद्धहेतुगोचरः परामर्शः सत्प्रतिपक्षत्वं, तद्वान् तद्विषयः प्रतिहेतुः सत्प्रतिपक्षहेत्वाभास इत्यर्थः ॥ ७७ ॥

श्रावणत्वादितो नित्योऽनित्यो जन्यत्वहेतुभिः ॥

उदाहरति-श्रवणत्वादीति । तथाहि-शब्दो नित्यः श्रावणत्वात् शब्दत्ववदिति शब्दनित्यत्वानुमानं, शब्दोऽनित्यः कृतकत्वादिति शब्दानित्यत्वानुमानम् । अत्र द्वयेपि दृष्टान्तलाभे तुल्यबलात् परस्परेण सत्प्रतिपक्षितत्वं-सन् प्रतिकूलः पक्षः कोट्यन्तरं प्रतिहेतुर्यः परामर्शो वा यस्येति व्युत्पत्तेः, तथा च प्रतिहेतुमान् प्रतिहेतुपरामर्शवान् वा हेतुः सत्प्रतिपक्षहेत्वाभास इति यावत् । एतस्य चानुमितिप्रतिबन्धः फलम् । यथा प्रकृत एव शब्दत्ववन्नित्यत्वव्याप्यश्रावणत्ववानयं शब्द इति परामर्शसत्त्वेपि घटवदनित्यत्वव्याप्यकृतकत्ववानयं शब्द इति परामर्शान्तरसत्त्वेपि च न नित्यत्वानुमितिर्नाप्यनित्यत्वानुमितिर्भवति तुल्यबलतया परस्परप्रतिबन्धात् । ननु शब्दो नित्यो वा न वेति संशयानुमितिरस्तु, यथा स्थाणुत्वपुरुषत्वोभयकोटिज्ञाने उच्चैस्त्वरूपसामान्यधर्मज्ञाने च सति स्थाणुर्वा पुरुषो वेति संशयो भवति तद्वत् । न च तदभावव्याप्यवत्ताज्ञानस्यानुमितिप्रतिबन्धकस्य सत्त्वे कथमनुमितिः स्यादिति वाच्यम्, लौकिकप्रत्यक्ष इवानुमितिं प्रत्यपि तादृशज्ञानस्य प्रतिबन्धकत्वे मानाभावादिति चेन्न, तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयालौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य लाघवात्प्रतिबन्धकतया तत्र संशयानुमितेरसम्भवात् । उक्तसंशयस्तु प्रत्यक्षप्रमाणजन्यस्थाणु बाधेन प्रतिबद्ध्यत इति संक्षेपः ॥ अयं च हेत्वाभासो गौतमीयेषु सूत्रेषु प्रकरणसमसंज्ञया कथितः । प्रकृष्टं गृहीतव्याप्तिपक्षसम्बन्धकं करणं लिङ्गं प्रकरणं तेन प्रतिहेतोर्गृहीतव्याप्तिपक्षसम्बन्धवत्त्वेन तुल्यत्वात् । तथा च तुल्यबलविरोधिपरामर्शकालिकपरामर्शविषयः सत्प्रतिपक्ष इति लक्षणनिष्कर्षः ॥

साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥

साध्यशून्य इति । पक्षतावच्छेदकविशिष्ट इत्यर्थः । तेन घटे गन्धसत्त्वेऽपि न क्षतिः । एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥ ७८ ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यामनुमानखण्डम् ॥

---

बाधं लक्षयति–साध्येति । यत्र यस्मिन्ननुमाने पक्षः पक्षतावच्छेदकविशिष्टः साध्यहीनः साध्येन रहितः असौ साध्याभाववान् पक्षो बाध उदाहृतः बाधहेत्वाभास इति कालात्ययापदिष्टादिशब्देन गौतमीयेषु सूत्रेषु कथित इत्यर्थः । शब्दार्थस्तु प्रागेवोक्तः ॥ एतज्ज्ञानं साक्षादनुमितिविरोधि । उदाहरति–उत्पत्तीति । यत्र यस्मिन्ननुमाने उत्पत्तिकालीनघटे उत्पत्तिकालविशिष्टे घटे गुणानां तत्कार्याणां द्वितीयक्षणादावुत्पत्तिसम्भवेन वस्तुतः प्रथमक्षणे निर्गुणे,गन्ध आदिर्यस्य सः गन्धादिः गन्धरूपरसस्पर्शादिः साध्यते पृथिवीत्वेनेति शेषः। तथाचोत्पत्तिकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वात् संमतवदित्यनुमाने उत्पत्तिकालावच्छिन्नो घटः पक्षः स च गन्धवान् न भवत्येव द्वितीयक्षण एव गन्धादिसम्भवात्। अतो बाधितार्थकमिदमनुमानमिति सिद्धम्। गन्धादिरित्यादिपदं घटे इत्यत्रापि योज्यम्,तथाच तादृशघटादौ गन्धादिरित्यर्थः । तेन शिखरावच्छिन्नः पर्वतो वह्निमान् धूमात्–मूलावच्छिन्नो वृक्षः कपिसंयोगी एतद्वृक्षत्वात्–वह्निरनुष्णः कृतकत्वाज्जलवदित्यादेश्च सङ्ग्रहः सिद्धः । एतादृशसुगमोदाहरणं विहाय विशिष्टपक्षकबाधोदाहरणं तु बाधस्य व्यभिचारस्वरूपासिद्धाभ्यामसङ्कीर्णत्वज्ञापनाय । एतेन यत्र पक्षे साध्यं तिष्ठतु वा न हेतुस्तु नास्त्येव तत्र स्वरूपासिद्धिरेव, यथा–ह्रदो वह्निमान् धूमादित्यादौ, यत्र तु साध्यं नास्ति हेतुरस्ति तत्र व्यभिचार एव, यथा–धूमवान् वह्नेः वह्निरनुष्णः कृतकत्वादित्यादौ

च, अतो न बाधो हेत्वाभास इति निरस्तम्-उत्पत्तिकालावच्छेदेन घटस्य गन्धशून्यत्वेपि पृथिवीत्वस्य गन्धाव्यभिचारित्वात्, अत एतादृशस्थले बाध एव हेत्वाभास इति भावः। अयं निष्कर्षः- साधारणस्याव्यभिचाराभावतया असाधारणानुपसंहारिणोः व्याप्ति-संशयाधायकत्वेन व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभावतया व्याप्ति-ज्ञानप्रतिबन्धकत्वं विरोधसत्प्रतिपक्षयोः साध्याभावानुमितिसाम-ग्रीत्वेनानुमितिप्रतिबन्धकत्वम्। एतावांस्तु तत्र विशेषः-विरोधे स एव हेतुः साध्याभावानुमितिसामग्री सत्प्रतिपक्षे तु प्रतिहेतुरिति। बाधस्य ग्राह्याभावनिश्चयत्वेनानुमितिप्रतिबन्धकत्वम्-अनाहार्याऽप्रामाण्यज्ञाना-नास्कन्दिततद्धर्मिकतदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषवि-शेषाजन्यतद्धर्मिकतज्ज्ञानमात्रे विरोधित्वात्। बाधबुद्ध्युत्तरक्षणे लौकि-कसन्निकर्षजन्यदोषविशेषजन्यविशिष्टबुद्धेरानुभविकत्वादुक्तं लौकि-कसन्निकर्षाजन्येत्यादि। न चैवं तदिन्द्रियजन्यलौकिकबाधनिश्चयोत्तरं तदिन्द्रियजन्यलौकिकविशिष्टबुद्ध्यापत्तिरिति चेन्न, तदिन्द्रियजन्यवि-शिष्टबुद्धौ तदिन्द्रियजन्यलौकिकतदभावनिश्चयत्वेन प्रतिबन्धकत्वोप-गमात्। तदिन्द्रियजन्योपनीतभानात्मकबाधनिश्चयोत्तरं लौकिकवि-शिष्टबुद्ध्युदयात्प्रतिबन्धकतावच्छेदककोटौ लौकिकत्वनिवेश इत्यास्तां विस्तरः। आश्रयासिद्धिस्वरूपासिद्ध्योः पक्षधर्मताज्ञानप्रतिबन्धकत्वम्। उपाधिः सत्प्रतिपक्षद्वाराऽनुमितिविरोधी व्यभिचारज्ञानद्वारा व्याप्ति-ज्ञानप्रतिबन्धको वा। व्यक्तीभविष्यति चेदं बुद्धिग्रन्थे। सिद्धसाधनन्तु पक्षताविघटकतया आश्रयसिद्धेऽन्तर्भवति। निग्रहस्थानान्तरमिति नवीनाः। इदमपि व्यक्तीभविष्यत्यग्रे। तथाचानुमितितत्कारणान्यतर-प्रतिबन्धकयथार्थज्ञानविषयो हेत्वाभास इति तल्लक्षणमपि प्राप्तमिति सङ्क्षेपः॥ ७८॥

इति श्रीनारायणतीर्थविरचितायां न्यायचन्द्रिकाया-
मनुमानखण्डं समाप्तम्॥

उपमितिं व्युत्पादयति—

ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥ ७९ ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥ ८० ॥

ग्रामीणस्येति । यत्रारण्यकेन केनचिद्ग्रामीणं—प्रत्युक्तं—'गोसदृशो गवयपदवाच्य' इति । पश्चाच्च ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यदर्शनं यज्जातं तदुपमितिकरणम् । तदनन्तरं गोसदृशो गवयपदवाच्य इत्यातिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः । तदनन्तरं गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमितिः । न त्वयं गवयपदवाच्य इत्युपमितिः—गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् ॥ ७९ ॥ ८० ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यामुपमानखण्डम् ॥

---

उपमानं लक्षयति—ग्रामीणस्येति । गवयादिकं पश्यतः—साक्षात्कुर्वतो, ग्रामीणस्य—ग्रामे भवस्य, प्रथमतो गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यश्रवणानन्तरं या गवादीनां सादृश्यधीः—गोसदृशो गवयपदवाच्यत्वशाब्दबोधः, सा करणं—व्यापारवदसाधारणं स्यादित्यर्थः । एतेन गोसदृशतया पिण्डप्रत्यक्षं सहकारिकारणमात्रं न करणमिति ज्ञापितम्—स्मृत्युत्तरं सादृश्यप्रत्यक्षे उपमित्यभावप्रसङ्गात् स्मृतिरूपव्यापाराभावात् ॥ ७९ ॥

व्यापारमाह—वाक्यार्थस्येति । अतिदिश्यते प्रतिपाद्यत इत्यतिदेशो—गोसदृशो गवयपदवाच्यत्वादिकं तादृशस्य वाक्यार्थस्य, स्मृतिः—श्रुतं मया गोसदृशो गवय—इत्येवं स्मरणं, व्यापारः—अतिदेशवाक्यार्थानुभवजन्यत्वे सत्यतिदेशवाक्यार्थानुभवजन्योपमितिजनक-

त्वात्। कारणस्य फलसापेक्षत्वात्फलमाह–गवयादिपदानामिति। गोसदृशोऽयं गवयो गवयपदवाच्य इत्याकारं गवयपदशक्तिज्ञानम्। आदिपदात्कटोरकण्टकाशित्वादौ वैधर्म्यज्ञानेन करभादिपदवाच्यताज्ञानं दीर्घग्रीवे उष्ट्रादौ उपमा उपमितिः सैव फलमित्यर्थः।

अयमत्र निष्कर्षः–क्वचित्कर्मणि गवयस्योपयोगं ज्ञात्वा तं जिज्ञासमानेन ग्रामीणेन कीदृशो गवय इति पृष्ट आरण्यकजनः समाचष्टे–'यथा गौस्तथा गवय' इति। अनन्तरं ततः कमपि गलकम्बलपिण्डं गोसदृशमनुभवतोऽतिदेशवाक्यार्थस्मरणाद् गवयो गवयपदवाच्य इति प्रतीतिर्भवति, सा न प्रत्यक्षस्य फलम्—अनाकर्णितातिदेशवाक्यस्यापि तत्प्रसङ्गात्। नापि वाक्यस्य, अननुभूतपिण्डस्यापि तत्प्रसङ्गात्। नापि मिलिततदुभयफलं, नगरस्थस्य वाक्यं वनस्थस्य प्रत्यक्षमिति तयोर्विभिन्नकालीनत्वेन मेलनस्यैवासम्भवात्। नापि गवयो गवयपदवाच्यो गोसदृशत्वात् व्यतिरेके घटवत्—गवयपदं गवयवाचकं असति वृत्त्यन्तरे वृद्धैः प्रयुज्यमानत्वात् यथा गोपदं गवां वाचकमित्याद्यनुमानस्य फलं, गवयत्वज्ञानं विना तेन रूपेणानुमानस्यैवासम्भवात्। तस्माद्यद्धर्मविशिष्टे अतिदेशवाक्येन यत्पदवाच्यत्वं ज्ञायते तद्धर्मज्ञानं यद्धर्मविशिष्टे तत्पदवाच्यताज्ञानमुपमितिरुपमानफलम्, यथा प्रकृत एवातिदेशवाक्येन गोसादृश्यविशिष्टे गवयपदवाच्यत्वं ज्ञायते गोसादृश्यं च गवयत्वविशिष्टे गवयपदवाच्यताज्ञानमुपमितिरित्यन्यत्र विस्तरः॥ ८०॥

इति श्री नारायणतीर्थविरचितायां न्यायचन्द्रिकायामुपमानखण्डम्॥

शाब्दबोधप्रकारं दर्शयति—

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥

पदज्ञानं त्विति । न तु ज्ञायमानं पदं करणं पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात् । पदार्थधीरिति । पदजन्यपदार्थस्मरणं व्यापारः । अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः । तत्रापि वृत्त्या पदजन्यत्वं बोध्यम् । अन्यथा घटादिपदात्समवायसम्बन्धेनाऽऽकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः । वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धः । अत्रैव शक्तिज्ञानस्योपयोगः । (पूर्वं) शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन स्मरणानुपपत्तेः । पदज्ञानस्य हि एकसम्बधिज्ञानविधयार्थस्मारकत्वम् । शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः । स चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः । आधुनिके नाम्नि शक्तिरस्त्येव—'एकादशेऽहनि पिता नाम कुर्यात्' इतीश्वरेच्छायाः सत्त्वात् । आधुनिकसङ्केतिते तु न शक्तिरिति सम्प्रदायः(१) । नव्यास्तु ईश्वरेच्छा न शक्तिः किन्त्विच्छैव तेनाधुनिकसङ्केतितेऽपि शक्तिरस्त्येवेत्याहुः ।

शक्तिग्रहस्तु व्याकरणादितः । तथाहि—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति । क्वचित्सति बाधके त्यज्यते । यथा वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते । चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः । तच्च गौरवात्त्यज्यते । किन्तु कृतौ शक्तिग्रहो लाघवात् । कृतिश्चैत्रादौ प्रकारीभूय भासते । न

(१) संप्रदायपदेनाधुनिकसंकेतिताच्छाब्दबोधो न स्यादित्यस्वरसः सूचितः । मतद्वयेप्यपभ्रंशात्मकगगर्यादिपदाच्छक्तिभ्रमादेव शाब्दबोध इत्यवधेयम् ।

च कर्तुरनभिधानाच्चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यम्, कर्तृसंख्यानभिधानस्य तत्र तन्त्रत्वात्। संख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः। कर्मत्वादीत्यस्येतरविशेषणत्वतात्पर्याविषयत्वमर्थः। तेन चैत्र इव मैत्रो गच्छतीत्यादौ न चैत्रे संख्यान्वयः। यत्र(१) कर्मादौ न विशेषणत्वे तात्पर्यं तद्वारणाय प्रथमान्तेति। (२)यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः। तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रादेर्वारणम्। स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलम्। तस्य द्वितीयान्तोपस्थाप्यत्वाद्वारणमिति। एवं व्यापारेऽपि न शक्तिर्गौरवात्। रथो गच्छतीत्यादौ तु (स्व)व्यापारे (३)आश्रयत्वे वा लक्षणा। जानातीत्यादौ तु आश्रयत्वे, नश्यतीत्यादौ तु प्रतियोगित्वे निरूढलक्षणा।

उपमानाद्यथा शक्तिग्रहस्तथोक्तम्(४)।

एवं कोशादपि शक्तिग्रहः। सति बाधके क्वचित्त्यज्यते। यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः (५)कोशेन व्युत्पादिता तथापि लाघवान्नीलादावेव शक्तिः। नीलादिविशिष्टे तु (६)लक्षणेति।

एवमाप्तवाक्यादपि। यथा कोकिलः पिकपदवाच्य इत्यादिशब्दात्पिकादिपदानां कोकिले शक्तिग्रहः।

---

(१) ननु चैत्र एव पचति चैत्रश्चैत्रं पश्यतीत्यादावेवकारार्थेऽन्यस्मिन् कर्मादौ च चैत्रस्य विशेषणत्वात् कथं तत्र संख्यान्वयः इति चेन्न विशेषणत्वमात्रेण तात्पर्याविषयत्वस्य विवक्षितत्वात्, इत्थं च तण्डुलं पचतीत्यादौ यदि विशेषणत्वमुख्यविशेष्यत्वाभ्यां तण्डुलबोधे तात्पर्यं तत्र संख्यान्वयवारणाय प्रथमान्तेत्यादीति भावः।

(२) द्वितीयदलस्य प्रकारान्तरेण प्रयोजनं वक्तुमन्यथा प्रथमदलार्थमाह—यद्वेति।

(३)रथो गच्छतीत्यत्र गमनानुकूलव्यापारस्य न बोधः किन्तु गमनाश्रयत्वस्यैवेति नवीनमतमाश्रित्याह—आश्रयत्वे वेति।

(४) उपमाननिरूपणावसर इत्यर्थः।

(५) 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति कोशस्योभयत्र शक्तिग्राहकत्वादिति भावः।

(६) 'गुणवचनान्मतुपो लुगिष्टः' इति स्मरणान्मतुपैव विशिष्टार्थसम्भवेऽलं लक्षणयेत्यपि वदन्ति।

एवं व्यवहारादपि । यथा प्रयोजकवृद्धेन घटमानयेत्युक्तम् , तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः, तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति । ततश्च घटं नय गामानयेत्यादिवाक्यादावावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति । इत्थं च भूतले नीलो घट इत्यादिवाक्यान्न शाब्दबोधः । घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यावधारणात् कार्यताबोधं प्रति च लिङादीनां सामर्थ्यात्तदभावा(१)न्न शाब्दबोध इति केचित्(२) । तन्न । प्रथमतः कार्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात् । अत एव—चैत्र ! पुत्रस्ते जातः; कन्या ते गर्भिणी जाता—इत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति । तथाच व्यभिचारात्कार्यान्विते न शक्तिः । न च तत्र तं पश्येत्यादि शब्दान्तरमध्याहार्यं, मानाभावात् । चैत्र ! पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च । इत्थञ्च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति ।

एवं वाक्यशेषादपि शक्तिग्रहः । यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः कङ्गौ च म्लेच्छानाम् । तत्र हि 'यदान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति'

वसन्ते सर्वशस्यानां जायते पत्रशातनम् ।
मोदमानाश्च तिष्ठन्ति यवाः कणशशालिनः ॥

इति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात्प्रयोगो नानाशक्तिकल्पने गौरवात् । हर्यादिपदे तु विनिगमकाभावान्नाना-

---

(१) तदभावादिति । कार्यताबोधं प्रति लिङादिपदानां स्वजन्यकार्यत्वोपस्थितिद्वारा हेतुत्वम्, घटादिपदानां कार्यत्वानुभवम्प्रति हेतुत्वेऽपि घटादिपदेषु कार्यत्वस्मारकशक्त्यभावेन स्मारक[illegible] कार्यत्वोपस्थापकलिङादिपदाभावाच्च भूतले घट इत्यादितः शब्दबोध इति भावः । (२) प्राभाकराः ।

क्तिकल्पनम् ।

एवं विवरणादपि शक्तिग्रहः । विवरणं तु तत्समानार्थकपदान्तरेण तदर्थकथनम् यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद्घटपदस्य कलशे शक्तिग्रहः । एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं (१)कल्प्यते ।

एवं (२)प्रसिद्धपदस्य सांनिध्यादपि शक्तिग्रहः । यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य कोकिले शक्तिग्रह इति ।

तत्र जातावेव शक्तिर्न तु व्यक्तौ—(३)व्यभिचारादानन्त्याच्च । व्यक्तिं विना च जातिभानस्यासम्भवाद्व्यक्तेरपि भानमिति केचित् । तन्न-शक्तिं विना व्यक्तिभानानुपपत्तेः । न च व्यक्तौ लक्षणा, अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात् । न च व्यक्तिशक्तावानन्त्यम्, सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात् । न चाननुगमः, गोत्वादेरेवानुगमकत्वात् । किञ्च गौः शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः । यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात्—समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शब्दबोधं प्रति च हेतुत्वात् । किञ्च गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यम्, गोत्वत्वं तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम्, तथाच गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात्तैवव गौरवम् । तस्मात्तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ(४) विश्राम्यतीति ।

---

(१) न च विवरणस्य कथं शक्तिग्राहकत्वं तद्वाचकपदाभावादिति वाच्यम्, आख्यातं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टशक्तकरोतिपदप्रतिपादितार्थप्रतिपादकत्वादित्यनुमानेन तस्य शक्तिग्राहकत्वादित्यर्थः । (२) प्रसिद्धार्थकपदस्येत्यर्थः ।

(३) यस्यां कस्यांचिद्व्यक्तौ शक्तिः सर्वासु वेति विकल्प्य क्रमेण दोषावाह—व्यभिचारादानन्त्याच्चेति । तत्र व्यभिचारस्त्वगृहीतशक्तिकव्यक्तावपि शाब्दबोधोदयादानन्त्यं च व्यक्तिभेदेनेति बोध्यम् । अनन्तगोव्यक्तीनामननुगततया विषयतासम्बन्धेन शक्तिज्ञाननिष्ठकारणतायामवच्छेदकत्वासंभवादिति भावः । (४) तथा च गौतमसूत्रम् 'जात्याकृतिव्यक्तयः पदार्थः' २।२।६४ इति ।

शक्तं पदम्, तच्चतुर्विधम्—क्वचिद्यौगिकं क्वचिद्रूढं क्वचिद्योगरूढं क्वचिद्यौगिकरूढम् । तथाहि यत्रावयवार्थ एव बुध्यते तद्यौगिकम्, यथा पाचकादिपदम् । यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढम्, यथा गोमण्डला(पा)दिपदम् । यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम्, यथा पङ्कजादिपदम् । तथाहि—पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति, समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति । न च केवलयाऽवयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यम्, रूढिज्ञानस्य केवलयौगिकार्थज्ञाने प्रतिबन्धकत्वादिति प्राञ्चः । (१)वस्तुवस्तु समुदायशक्त्युपस्थितपद्मेऽवयवार्थ-पङ्कजनिकर्तुरन्वयो भवति-(२)सांनिध्यात् । यत्र तु (३)रूढ्यर्थस्य बाधः प्रतिसन्धीयते(४) तत्र लक्षणया कुमुदादेर्बोधः । यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्वाह इत्यप्याहुः । यत्र तु स्थलपद्मादाववयवार्थबाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः । यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणयैवेति । यत्र तु यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम्, यथोद्भिदादिपदम् । तत्र हि उद्भेदनकर्ता तरुगुल्मादिरपि बुध्यते यागविशेषोऽपीति ॥ ८१ ॥

शब्दप्रमाणं व्युत्पादयति—पदज्ञानमिति । पदं-वर्णसमूहो राम इत्यादिकं, तस्य ज्ञानं शाब्दबोधे करणं—स्वजन्यव्यापारसम्बन्धेनासाधारणं कारणं, तच्छ्रवणोत्तरमेव शाब्दबुद्धेरानुभविकत्वादिति भावः । तत्र को व्यापार ? इत्याशङ्कायां पदार्थोपस्थितिं विनान्वयबोधाभावात्सैव व्यापार इत्याह-द्वारमिति । पदार्थधीः पदजन्यपदार्थोपस्थितिः । न च पदजन्येति व्यर्थं, प्रत्यक्षेण कलायादिदर्शनेपि पच-

(१) प्रतिबंधकत्वं जनकज्ञानविघटकत्वेनेवोतानियमभङ्गमस्वरसं 'प्राच' इत्यनेन सूचयन् मणिकारमतमाह वस्तुतस्त्वित्यादिना । (२) रूढ्यर्थस्य संनिहितोपस्थितिकत्वादित्यर्थः ।

(३) रूढ्यर्थस्य बाध इति तु रूढ्यर्थयोगार्थयोः परस्परान्वयबोधसामग्रीविरहस्योपलक्षणम् ।

(४) प्रतिसंधीयते इत्यनन्तरं कुमुदत्वेन च बोधे तात्पर्यज्ञानमिति पूरणीयम् ।

तीत्युक्ते कलायपाकबोधापत्तेः। सापि न केवलं सम्बन्धिविधया पदजन्या, अपि त्वनुपदमेव वक्ष्यमाणवृत्त्या पदजन्या बोध्या, अन्यथा घटादिपदात्समवायेनाकाशस्मृतौ घटो नास्तीति वाक्यादाकाशान्वयबोधापत्तेः, अत एव गृहीतवृत्तिकस्य पदस्य ज्ञानेन जन्यत्वे सति पदजन्यशाब्दबोधजनकत्वरूपं व्यापारत्वमपि घटत इति संक्षेपः।

वक्ष्यमाणरीत्या वाक्यजो बोधोऽनुमितिरेवेति सौगताः, वैशेषिकाश्च, तन्न—अननुमितमसाक्षात्कृतममुमर्थं प्रत्येमीति सर्वजनीनानुभवेनानुमित्यादिविलक्षणत्वावधारणात्, अतः पदज्ञानफलं प्रमित्यन्तरमेवेत्याशयेनाह—शाब्दबोध इति। शाब्दयामीत्यनुव्यवसायसाक्षिकजातिविशेषवान् प्रत्ययः शाब्दबोधाख्या प्रमा तत्करणं शब्दः शब्दाख्यं मानमनुमानादिभ्यः पृथगेवेति भावः।

ननु यदि स्वातन्त्र्येणैव शब्दो मानं तदा घटमानयेत्यादितः पामराणामप्यर्थप्रत्ययः स्यात्तत्राह—शक्तीति। तथाच तत्र शक्तिनिश्चयस्य सहकारिकारणत्वात्पामराणां च घटादिशब्दे शक्तेरग्रहान्न बोध इति भावः। शक्तिश्चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूप ईश्वरसङ्केत एव। पामरादिसङ्केतिता गावीगोणादिशब्दा नाभिधायकाः तत्र तादृशसङ्केते मानाभावात्, न हि ततोऽन्वयबोधस्तेषाम्। कथमिति चेच्छक्तिभ्रमादिति गृहाण। शक्तिश्च न मीमांसकानामिव जातावेव, न वा वैयाकरणानामिव व्यक्तावेव—पदाज्जातिव्यक्त्योर्द्वयोरेव बोधदर्शनात्, अन्यथा यत्र शक्त्यनङ्गीकारस्तज्ज्ञानानुपपत्तिः—शक्तिग्रहस्य पदार्थधीहेतुत्वकथनादिति संक्षेपः।

शक्तिग्रहश्च वृद्धव्यवहारेण। तथाहि—व्युत्पित्सुर्बालो गामानयेति प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य प्रवृत्तिमुपलभमानो गवानयनं च दृष्ट्वा प्रयोज्यवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्याश्वमानय गां बधानेति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिरश्वपदस्याश्वत्वविशिष्टे शक्तिरित्यवधारयति। स च शक्तिग्रहो न संनिहितव्यक्तिष्वेव, तथासति देशान्तरीयापूर्वव्यक्तिबोधस्तत्पदादिना न स्यात्-तत्र शक्त्यग्रहात्, किन्तु सामान्यलक्षणया सकलगोव्यक्तिप्रभृतिषु शक्तिग्रहसमय एवोपस्थितौ सर्वत्रैव तज्जात्यादिविशिष्टे तत्तत्पदानामिति बोध्यम्॥ सर्वत्र व्यवहारस्य कार्यपरत्वात्कार्यान्वित एव शक्तिरिति तु, न

युक्तम्-काव्येषु त्रिभुवनतिलको भूपतिरित्यादौ सिद्धेऽपि व्यवहार-दर्शनेन शक्तिकल्पनादित्यन्यत्र विस्तरः ॥ ८१ ॥

लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः ।

लक्षणेति । गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोध इति । सा च शक्यसम्बन्धरूपा । तथाहि—प्रवाह-रूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणम् । ततः शाब्द-बोधः । परन्तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशये-त्यत्र लक्षणा न स्यात्-यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात् । तेन यष्टि-प्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा । एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा-सर्वतो दधिरक्षा-यास्तात्पर्यविषयत्वात् । एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थ-वाहित्वे लक्षणा । इयमेवाजहत्स्वार्था लक्षणेत्युच्यते । एकसार्थवाहि-त्वेन रूपेण छत्रितदन्ययोर्बोधात् । यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात्, तदा क्वचिद्गङ्गापदस्य तीरे, क्वचिद्घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात् ।

इदन्तु बोध्यम् । शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः । यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् । अत एव लक्ष्यतावच्छेदके न लक्षणा-तत्प्रकारकबो-धस्य तत्र लक्षणां विनाप्युपपत्तेः । परन्तु एवंक्रमेण शक्यतावच्छेद-केऽपि शक्तिर्न स्यात्, तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् ।

(१)यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा(२) लक्षणा

---

(१) लक्षितलक्षणाया जहत्स्वार्थायामन्तर्भावमाह -यत्रेति ।

(२) स्वनाच्यरेफद्वयघटितपदवाच्यत्वादिरूपेत्यर्थः ।

सा लक्षितलक्षणेत्युच्यते । यथा द्विरेफादिपदात् रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते इति तत्र लक्षितलक्षणा । किन्तु(१) लाक्षणिकं पदं नानुभावकम् । लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम्—शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणात् (इति प्राञ्चः । नवीनास्तु तदप्यनुभावकमेव, पदार्थोपस्थितिस्तु द्वारम्, अन्यथा तुल्ययुक्त्या शक्तस्यापि पदस्यानुभावकत्वापत्तेरित्याहुः ।) वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणापि नास्ति । यत्र गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा । गभीरापदार्थस्य नद्या सहाभेदेनान्वयः—क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात् । यदि तत्रैकदेशान्वयोऽपि न स्वीक्रियते, तदा नदीपदस्य गभीरनदीतीरे लक्षणा । गभीरपदं तात्पर्यग्राहकम् । बहुव्रीहावप्येवम् । तत्र हि चित्रगुपदादौ यद्येकदेशान्वयः स्वीक्रियते, तदा गोपदस्य गोस्वामिनि लक्षणा, गवि चित्राभेदान्वयः । यदि त्वेकदेशान्वयो न स्वीक्रियते, तदा गोपदस्य चित्रगोमति लक्षणा, चित्रपदं तात्पर्यग्राहकम् । एवमारूढवानरो वृक्ष इत्यत्र वानरपदस्य वानरारोहणकर्मणि लक्षणा, आरूढपदं तात्पर्यग्राहकम् । एवमन्यत्रापि बोध्यम् । तत्पुरुषे तु पूर्वपदे लक्षणा । तथाहि—राजपुरुष इत्यादौ राजपदार्थेन पुरुषपदार्थस्य साक्षान्नान्वयो—निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात्, अन्यथा राजा पुरुष इत्यत्रापि तथान्वयबोधः स्यात् । घटः पटो न इत्यादौ घटपटाभ्यां नञः साक्षादेवान्वयान्निपातातिरिक्तेति । नीलो घट इत्यादौ नामार्थयोरभेदसम्बन्धेनान्वयाद्भेदेति । न च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम्, अस्मृतविभक्तेरपि ततो बोधोदयात् । तस्माद्राजपदादौ राजसम्बन्धिनि लक्षणा, तस्य च पुरुषेण स-

(१)ननु तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वाल्लाक्षणिकशाब्दबोधः कथं स्यादित्यत आह किन्त्विति।

हाभेदान्वयः । द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यते, तत्र न लक्षणा । (१)न च साहित्ये लक्षणेति वाच्यम्, (२)साहित्यशून्ययोरपि द्वन्द्वदर्शनात् । न चैकक्रियान्वयित्वरूपं साहित्यमस्तीति वाच्यम् क्रियाभेदेऽपि धवखदिरौ पश्य छिन्धीत्यादिदर्शनात्, साहित्यस्याननुभवाच्च(३) । अत एव 'राजपुरोहितौ सायुज्यकामौ यजेयाताम्'इत्यत्र लक्षणाभावाद्द्वन्द्व आश्रीयते । तस्मात्साहित्यं नार्थः, किन्तु वास्तवभेदो यत्र तत्र द्वन्द्वः । न च नीलघटयोरभेद इत्यादौ कथमिति वाच्यम्, तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे लक्षणा । अभेद इत्यस्य चाश्रयाभेद इत्यर्थात् । समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयत इत्युच्यते, तदाऽहिनकुलमित्यादौ परपदेऽहिनकुलसमाहारे लक्षणा, पूर्वपदं तु तात्पर्यग्राहकम् । न च भेरीमृदङ्गं वादयेत्यत्र कथं समाहारस्यान्वयस्तस्यापेक्षाबुद्धिविशेषरूपस्य वादनासम्भवादिति वाच्यम्, (स्वाश्रयवृत्तित्वरूप)परम्परासम्बन्धेन तदन्वयात् । एवं शङ्खमूलीत्यावपि । परे तु अहिनकुलमित्यादौ अहिर्नकुलश्च बुध्यते प्रत्येकमेकत्वान्वयः । समाहारसंज्ञा च यत्रैकत्वं नपुंसकत्वं च 'द्वन्द्वश्च प्राणितूर्य'२।४।२। इत्यादिसूत्रेणोक्तं तत्रैव, अन्यत्रैकवचनमसाध्वित्याहुः । पितरौ श्वशुरावित्यादौ पितृपदे जनकदम्पत्योः, श्वशुरपदे स्त्रीजनकदम्पयोर्लक्षणा । एवमन्यत्रापि । घटा इत्यादौ न लक्षणा-घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात् । कर्मधारयस्थले तु, नीलोत्पलमित्यादा-

---

(१) धवखदिरावित्यत्र धवत्वं खदिरत्वं वा प्रत्येकं नोद्देश्यतावच्छेदकं-आकाशावित्यादेः प्रामाण्यवारणाय सुपामुद्देश्यतावच्छेदकव्याप्यसंख्याबोधकत्वस्य कल्पनीयत्वात्, एवं च धवद्वयस्य खदिरद्वयस्य वा बोधापत्तेः । अतो खदिरपदस्य धवखदिरसाहित्याश्रये लक्षणाभ्युपेया । एवं चोद्देश्यतावच्छेदकसाहित्यव्याप्यत्वं न धवद्वयवर्तिद्वित्वस्य नवा खदिरद्वयवर्तिद्वित्वस्येति न धवद्वयादेर्बोध इति मीमांसकमतेनाशङ्कते—न च साहित्येति ।

(२)सहवृत्तित्वरूपं साहित्यं लक्ष्यमुतैकक्रियान्वयित्वमिति विकल्प्याद्यं दूषयति-साहित्यशून्ययोरपीति ।

(३)स्वरूपतः एकक्रियान्वयित्वस्य धवखदिरयोः सत्त्वेऽप्येकक्रियान्वयित्वस्य शाब्दबोधाविषयत्वादित्यर्थः ।

वभेदसम्बन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारः । तत्र च न लक्षणा । अत एव 'निषादस्थपतिं याजयेत्' इत्यत्र न तत्पुरुषो लक्षणापत्तेः, किन्तु कर्मधारयो लक्षणाभावात् । न च निषादस्य सङ्करजातिविशेषस्य वेदानधिकाराद्याजनासम्भव इति वाच्यम्, निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनीयत्वात् । लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या तत्कल्पनायाः फलमुखगौरवतयाऽदोषत्वादिति । उपकुम्भमर्धपिप्पलीत्यादौ परपदे तत्सम्बन्धिनि लक्षणा, पूर्वपदार्थप्रधानतया चान्वयबोध इति । इत्थञ्च समासे न क्वापि शक्तिः-पदशक्त्यैव निर्वाहादिति ॥

शक्तिवल्लक्षणापि शब्दवृत्तिरावश्यकी गङ्गायां घोष इत्यादौ गङ्गापदात्तीरबोधस्यान्यथानुपपत्तेः। तत्र का लक्षणा तत्राह-लक्षणेति । गङ्गापदशक्यो गङ्गाप्रवाहस्तत्सम्बन्धस्तीरे लक्षणेत्यर्थः । सा त्रिविधा-जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति । यत्र वाच्यार्थस्यान्वयाभावस्तत्र जहदिति, यथा गङ्गायां घोष इत्यादौ । यत्र वाच्यस्याप्यन्वयस्तत्राजहदिति, यथा छत्रिणो गच्छन्तीत्यादौ । यत्र वाच्यैकदेशत्यागेनैकदेशान्वयस्तत्र जहदजहदिति, यथा सोयं देवदत्त इत्यादौ । गौण्यपि लक्षणैव लक्ष्यमाणगुणसम्बन्धरूपा, यथा अग्निर्माणवक इत्यादौ । बीजमाह—तात्पर्येति । वक्ष्यमाणतात्पर्यानुपपत्तिप्रतिसन्धानादित्यर्थः । यष्टीः प्रवेशयेत्यादौ भोजनादितात्पर्यानुपपत्त्यैव यष्ट्यादिपदस्य यष्टिधरादौ लक्षणाङ्गीकारात् सर्वत्र तात्पर्यानुपपत्तिरेव लक्षणाबीजम् । गङ्गायां घोष इत्यादावपि तीरे घोष इति बोधे एव तात्पर्यम्, गङ्गापदे गङ्गायां मत्स्य इति बोधे तात्पर्ये तु घोषपद एव लक्षणाङ्गीकारादिति संक्षेपः ।

(१)आसत्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ॥ ८२ ॥
कारणं, संनिधानं तु पदस्यासत्तिरुच्यते ।

आसत्तिरिति । आसत्तिज्ञानं योग्यताज्ञानमाकाङ्क्षाज्ञानं तात्पर्यज्ञानं च शाब्दबोधे कारणम् । तत्रासत्तिपदार्थमाह—संनिधानं त्विति । अन्वयप्रतियोग्यनुयोगिपदयोरव्यवधानमासत्तिः तज्ज्ञानं शाब्दबोधे कारणम्,

(१) चन्द्रिकाकारमते समस्तपदमिदम् ।

क्वचिद्यत्रहितेप्यव्यवधानभ्रमाच्छाब्दबोधादिति केचित् । वस्तुतस्तु अव्यवधानज्ञानस्यानपेक्षितत्वात् यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः(१) शाब्दबोधे कारणम् । (२)तेन गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौ न शाब्दबोधः । नीलो घटो द्रव्यं पट इत्यादावासत्तिभ्रमाच्छाब्दबोधः(३) । आसत्तिभ्रमाच्छाब्दभ्रमाभावेऽपि न क्षतिः । ननु यत्र छत्री कुण्डली वासस्वी देवदत्त इत्याद्युक्तं तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तदुत्तरपदस्मरणासंभव इति चेत् । न । प्रत्येकपदानुभवजन्यसंस्कारैश्चरमस्य तावत्पदविषयकस्मरणस्याव्यवधानेनोत्पत्तेः । नानासंनिकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् । तावत्पदसंस्कारसहितचरमवर्णज्ञानस्याद्बोधकत्वात् । कथमन्यथा नानावर्णैरेकपदस्मरणम् । परन्तु तावत्पदार्थान स्मरणादेकदैव खले कपोतन्यायेन तावत्पदार्थानां क्रियाकर्मभावेनान्वयरूपः शाब्दबोधो भवतीति केचित् ।

वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति ।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ॥

परंतु—

(४)यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥

तथाच खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या महावाक्यार्थबोध इत्यप्याहुः । एतेन तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः । तत्तद्वर्णसंस्कारसहितचरमवर्णोपलम्भेन तद्व्यञ्जकेनैवोपपत्तेरिति ।

---

(१) अव्यवधानमासत्तिः, तदुपस्थितिः कारणमित्यर्थः ।

(२) एतादृशयत्तत्पदगर्भासत्तिनिर्वचनेन ।

(३) आसत्तिभ्रमाच्छाब्दभ्रम इति प्राचीनगाथा तु निर्युक्तिकत्वादश्रद्धेयेति भावः ।

(४) स्वार्थाकाङ्क्षितं स्वार्थयोग्यं यत् यत्संनिधानं प्रपद्यते स्वार्थोपस्थितिविषयो भवति तेन तेनैवान्वितः स्वार्थः पदैः प्रथममनुभाव्यतेऽनन्तरं च महावाक्यार्थबोध इत्यर्थः । एवञ्च पूर्वोक्तसमूहालम्बनात्मकं पदार्थस्मरणं विनापि निर्वाह इति भावः ।

(१)इदन्तु बोध्यम् । यत्र द्वारमित्युक्तं तत्र पिधेहीत्यादिपदस्य ज्ञानादेव बोधो, न तु पिधानादिरूपार्थज्ञानात्—पदजन्यतत्पदार्थोपस्थितेस्तत्तच्छाब्दबोधे हेतुत्वात् । किञ्च क्रियाकर्मपदानां तेन तेनैव रूपेणाकाङ्क्षितत्वात्, तेन क्रियापदं विना कथं शाब्दबोधः स्यात् । तथा पुष्पेभ्य इत्यादौ स्पृहयतीत्यादिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः पदाध्याहार आवश्यकः ॥

ननु पदार्थोपस्थितौ यदि शाब्दबोधस्तदा घटः कर्मत्वमानयनं कृतिरिति वाक्यात्, वह्निना सिञ्चति, प्रहरे प्रहरेऽसहोच्चारितेभ्योपि शाब्दबोधापत्तिस्तत्राह-आसत्तीत्यादि । आसत्तिश्च योग्यता च आकाङ्क्षा च तात्पर्यं चासत्तियोग्यताकाङ्क्षातात्पर्याणि तेषां ज्ञानं शाब्दबोधे कारणं—आसत्त्यादिभ्रमेणापि शाब्दबोधोदयादिति भावः ॥ ८२ ॥

तत्रासत्तिमाह—सन्निधानं त्विति । प्रकृतान्वयबोधाननुकूलपदव्यवधानाभाव इत्यर्थः । अत एव गिरिरग्निमानित्यासन्नं, अनासन्नं च गिरिर्भुक्तमग्निमान् देवदत्तेनेति । न च प्रकृतान्वयबोधाननुकूलेति व्यर्थं, स्थाल्यामोदनं पचतीत्यत्रोदनेन व्यवहिते पाके स्थाल्यामित्यस्यानासन्नत्वनिवारकत्वेन सार्थक्यात्, ओदनपदस्य स्थाल्यधिकरणकोदनकर्मकपाककर्त्तृत्यन्वयबोधानुकूलत्वात् । श्लोकादौ श्लोकापदान्नान्वयबोधः किन्तु योजनावाक्यादित्याहुः ।

योग्यतां निर्वक्ति—

**पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥ ८३ ॥**

पदार्थे इत्यादिना । एकपदार्थेऽपरपदार्थसम्बन्धो योग्यतेत्यर्थः । तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न शाब्दबोधः । नन्वेतस्या योग्यताया ज्ञानं शाब्दबोधात्प्राक्सर्वत्र न सम्भवति—वाक्यार्थस्यापूर्वत्वादिति चेत, न—तत्तत्पदार्थस्मरणे सति क्वचित्संशयरूपस्य क्वचिन्निश्चयरूपस्यापि योग्यताया ज्ञानस्य सम्भवात् । नव्यास्तु योग्यताज्ञानं

(१) अवान्तरवाक्यार्थबोधपूर्वकमहावाक्यार्थबोधेऽवान्तरवाक्यार्थस्मरणमेव हेतुः नतु समूहालम्बनस्मृतिः नहि शाब्दबोधे पदजन्यपदार्थोपस्थितिः कारणम् लाघवेन पदार्थोपस्थितेरेव हेतुत्वात् अत एवं द्वारमित्यादौ न पदाध्याहारः किन्त्वर्थाध्याहार इति प्राभाकरमतं दूषयति इदन्तु बोध्यमित्यादिना ।

न शाब्दज्ञानकारणम् । वह्निना सिञ्चतीत्यादौ सेके वह्निकरणत्वाभावरूपायोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोधः । तदभावनिश्चयस्य लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे प्रतिबन्धकत्वाच्छाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धम् । योग्यताज्ञानविलम्बाच्च शाब्दबोधविलम्बोऽसिद्ध इति वदन्ति ॥ ८२ ॥ ८३ ॥

योग्यतामाह-पदार्थेति । तत्र-आसत्त्यादिषु मध्ये,योग्यता-पदार्थे तद्वत्ता-एकपदार्थेऽपरपदार्थस्य प्रकृतसंसर्गवत्त्वमित्यर्थः। तेन पयसा सिञ्चतीति योग्यं-पयसि सेकसंसर्गस्य सत्त्वात् । अयोग्यं तु वह्निना सिञ्चतीति—वह्नौ सेकसंसर्गस्याभावात् । देवदत्तो गौरित्यत्र देवदत्ते स्वामित्वरूपसम्बन्धसत्त्वात् योग्यतापत्तेः प्रकृतेति, तथाच प्रकृतवाक्ये यः प्रतिपाद्यः सम्बन्धस्तद्वत्त्वमित्यर्थः, स चात्राभेदः, स च नास्तीति न तद्योग्यमिति सङ्क्षेपः ॥ ८३ ॥

आकाङ्क्षां निर्वक्ति—

यत्पदेन (१)विना यस्याननुभावकता भवेत् ।
आकाङ्क्षा,

यत्पदेनेति । येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन पदेन सह तस्याकाङ्क्षेत्यर्थः । क्रियापदं विना कारकपदं नान्वयबोधं जनयतीति तेन तस्याकाङ्क्षा । वस्तुतस्तु क्रियाकारकपदानां संनिधानमासत्त्या चरितार्थम् । परन्तु घटकर्मताबोधं प्रति घटपदोत्तरद्वितीयारूपाकाङ्क्षाज्ञानं कारणम्, तेन घटः कर्मत्वमानयनं कृतिरित्यादौ न शाब्दबोधः । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ तु पुत्रेण सह राजपदस्य तात्पर्यग्रहसत्त्वात्तेनैवान्वयबोधः । पुरुषेण सह तात्पर्यग्रहे तु तेन सहान्वबोधः स्यादेव ॥

आकाङ्क्षां निर्वक्ति—यत्पदेनेति । येन पदेन विनेत्यर्थः, अन्यस्यपदान्तरस्य, अननुभावकता—अन्वयानुभवाजनकत्वं तेन पदेन सह

(१) विनाऽन्यस्येति चंद्रिकाभिमतः पाठः ।

त्तस्य पदस्याकाङ्क्षेत्यर्थः। पदस्य पदान्तराभावप्रयुक्तान्वयाननुभावकत्वमिति यावत्। यथा घटमानयेत्यादौ क्रियाकारकादिपरस्परं विना परस्परमन्वयानुभवाजननात्।यत्पदं यत्पदेन सह सदृशान्वयबोधकं तत्पदस्य तेन समभिव्याहारः तादृशबोधे आकाङ्क्षेति निष्कर्षः। अत उपपद्यते तज्ज्ञानं कारणमिति सङ्क्षेपः॥

वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्॥ ८४॥

तात्पर्यं निर्वक्ति—वक्तुरिच्छेति। यदि तात्पर्यज्ञानं कारणं न स्यात्तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोध इति न स्यात्। न च तात्पर्यग्राहकप्रकरणादीनां शाब्दबोधे कारणत्वमस्त्विति वाच्यम्, तेषामननुगमात्। तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्यज्ञानमेव लाघवात्कारणमस्तु। इत्थं च वेदस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते। न च तत्राध्यापकतात्पर्यज्ञानं कारणमिति वाच्यम्, सर्गादावध्यापकाभावात्। न च प्रलय एव नास्ति कुतः सर्गादिरिति वाच्यम्, (१)प्रलयस्यागमेषु प्रतिपाद्यत्वात्। इत्थं च शुकवाक्येऽपीश्वरीयतात्पर्यज्ञानं करणम्। विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणम्। अन्ये तु नानार्थादौ क्वचिदेव तात्पर्यज्ञानं कारणम्। तथाच शुकवाक्ये विनैव तात्पर्यज्ञानं शाब्दबोधः। वेदे (२)त्वनादिमीमांसापरिशोधिततर्कैरर्थावधारणमित्याहुः॥८४॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां शब्दखण्डं समाप्तम्।

—:*:—

तात्पर्यं निर्वक्ति–वक्तुरिच्छेति। वक्ताऽत्र नोच्चारयिता ग्राह्यः–मौनिश्लोकेऽव्याप्तेः, किन्त्वभिसन्धापयिता, तथाचेदं पदमेतस्मिन्नर्थेऽस्यान्वयं प्रत्याययत्वित्यभिसन्धापयितुरिच्छा तात्पर्यमित्यर्थः। अस्य

(१) कार्यद्रव्यानधिकरणकार्याधिकरणकालविशेषात्मकस्य प्रलयस्य। आगमेष्विति। 'नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यत्, इत्यादिष्वागमे'ष्वित्यर्थः।

(२)मीमांसा लाघवज्ञानात्मकस्तर्कः। परिशोधितेति। सहकृतेत्यर्थः। तर्कः अनुमानं इत्यर्थः।

संशये व्यतिरेकनिश्चये वाऽन्वयाबोधात्, तद्भ्रमे चान्वयबाधात् । वेदे शुकादौ च भगवदिच्छैव गतिरित्यास्तां विस्तरः । तस्मात्सिद्धं वृत्त्या पदैरुपस्थितानामर्थानामाकाङ्क्षासत्तियोग्यतादिबलाच्छब्दतो वाक्यार्थस्यापूर्वस्य भानं, स एव शाब्दबोध इति । तत्र वाक्यार्थः संसर्गः, यथा प्रातिपदिकार्थविभक्त्यर्थधात्वर्थाख्यातार्थादीनां सम्बन्धः । यथा तण्डुलं पचतीत्यत्र तण्डुलस्य प्रातिपदिकार्थस्याधेयत्वलक्षणो द्वितीयावाच्ये विक्लित्तिरूपे फले, तस्य धात्वर्थे पाके जन्यजनकभावलक्षणः, धात्वर्थस्याख्यातार्थे यत्नेऽनुकूलत्वादिरूपः, आख्यातार्थस्य तु पुरुषे समवायलक्षणः सम्बन्धः, तथाच तण्डुलवृत्तिविक्लित्तिजनकपाकानुकूलयत्नवान् पुरुष इति शाब्दबोधः । ग्रामं गच्छतीत्यादौ ग्रामवृत्तिसंयोगजनकगमनानुकूलयत्नवानिति शाब्दबोधः । ग्रामं त्यजतीत्यादौ ग्रामवृत्तिविभागजनकत्यागानुकूलयत्नवानिति बोधः । रथो गच्छतीत्यादौ त्वाख्यातस्य व्यापारे लक्षणा, रामो जानातीत्यादौ चाश्रयत्वे, भ्रमो नश्यतीत्यादौ प्रतियोगित्वे, एवं च रथो गमनानुकूलव्यापारवान् रामो ज्ञानाश्रयत्ववान् भ्रमो नाशप्रतियोगित्ववानित्यादिबोधः स्वयमूह्यः । कर्माख्यातस्थले चैत्रेण पच्यते तण्डुलादिरित्यत्र कर्मैव मुख्यो विशेष्यः, तृतीयार्थः कृतिस्तस्याः जन्यतासम्बन्धेन पाकेऽन्वयः, पाकस्य च जन्यतासम्बन्धेन द्वितीयावाच्ये कर्मत्वे प्राप्ताप्राप्तविवेकरीत्या फलरूपे विक्लित्तिपदार्थेऽन्वयस्तस्य च प्रथमान्तपदार्थे कर्मण्यन्वयः, तथाच चैत्रवृत्तिकृतिजन्यपाकजन्यविक्लित्तिशाली तण्डुल इति बोधः । चैत्रेण पाचयति तण्डुलं मैत्र इत्यादौ तु तृतीयार्थो वृत्तित्वं, तण्डुलकर्मत्वस्य पाकेऽन्वयः, पाकस्य णिजर्थकृतौ, तस्याश्च तिङर्थकृतौ, तथाच चैत्रवृत्तितण्डुलकर्मकपाकानुकूलकृतिजनककृतिमान् मैत्र इति बोधः । घटं जानातीत्यादौ तु धात्वर्थफलस्याभावेन विषयत्वं लक्षणया द्वितीयार्थः, तथा च घटविषयकज्ञानाश्रयत्ववानिति बोधः । गां पयो दोग्धीत्यादौ द्विकर्मकस्थले तु गौणमुख्यकर्मोत्तरद्वितीयाया आधेयत्वमर्थः, दुहिर्विभागानुकूलक्रियानुकूलव्यापारविशेषः कर्तृनिष्ठोऽर्थः विभागे गोनिरूपितवृत्तित्वस्य क्रियायां पयोवृत्तित्वस्यान्वयात् गोवृत्तिविभागानुकूलव्यापारानुकूलकृतिमानिति शाब्दबोध इत्यादि स्वयमूह्यम् ॥ ८४ ॥

इति श्रीनारायणतीर्थविरचितायां न्यायचन्द्रिकायां शब्दखण्डं समाप्तम् ।

पूर्वमनुभवस्मरणभेदाद्बुद्धेर्द्वैविध्यमुक्तम् । तत्रानुभवप्रकारा दर्शिताः । सुगमतया स्मरणं न दर्शितम् । तत्र हि पूर्वानुभवः कारणम् । अत्र केचित्—अनुभवत्वेन न कारणत्वं किन्तु ज्ञानत्वेनैव, अन्यथा स्मरणानन्तरं स्मरणं न स्यात्—समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात् । मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यत इत्याहुः । तन्न—यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट सकलविषयकस्मरणं तु नाभूत्, तत्र फलस्य संस्कारनाशकत्वाभावात्कालस्य रोगस्य वा (१)चरमफलस्य वा संस्कारनाशकत्वं वाच्यम्, तथाच न क्रमिकस्मरणानुपपत्तिः । न च पुनःपुनः स्मरणाद् दृढतरसंस्कारानुपपत्तिरिति वाच्यम्, झटित्युद्बोधकसमवधानस्य दार्ढ्यपदार्थत्वात् । न च विनिगमनाविरहादेव ज्ञानत्वेनापि जनकत्वं स्यादिति वाच्यम्, विशेषधर्मेण व्यभिचाराज्ञाने सामान्यधर्मेणान्यथासिद्धत्वात् । कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारणत्वम् ? न चान्तरालिकस्मरणानां संस्कारनाशकत्वसंशयाद्व्यभिचारसंशय इति वाच्यम् । अनन्तसंस्कारतन्नाशकल्पनापेक्षया चरमस्मरणस्यैव लाघवात्संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात् ॥ इति स्मृतिप्रक्रिया ॥

इदानीं क्रमप्राप्तं मनो निरूपयितुमाह—

साक्षात्कारे सुखादीनां करणं मन उच्यते ।

साक्षात्कार इति । एतेन मनसि प्रमाणं दर्शितम् । तथाहि—सुखसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवत् इत्यनुमानेन मनसः करणत्वसिद्धिः । न चैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यम्, लाघवादेकस्यैव तादृशसक-

(१) ननु कालादेः कालत्वादिना नाशकत्वे संस्कारमात्रस्य क्षणिकत्वापत्तिः तत्तद्व्यक्तित्वेन तथात्वे गौरवमत आह चरमेति । चरमफले वैजात्यं कल्पयित्वा तेन रूपेण नाशकत्वं वाच्यमित्यर्थः ।

खसाक्षात्कारकरणतया सिद्धेः । (१)एवं सुखादीनामसमवायिकारणसंयोगाश्रयतया(२) मनसः सिद्धिर्बोद्धव्या ।

क्रमप्राप्तं मनो निरूपयिष्यन् मनसि प्रमाणमाह—साक्षात्कार इति । सुखादीनां साक्षात्कारे करणमसाधारणं कारणमिन्द्रियं मन उच्यते, तथा च सुखादिसाक्षात्कार इन्द्रियजन्यः जन्यसाक्षात्कारत्वाच्चाक्षुषसाक्षात्कारवदित्यनुमानेनेन्द्रियजन्यत्वसिद्धौ बहिर्द्रव्यासमवेतगुणसाक्षात्कारत्वेन सुखादिसाक्षात्कारस्य चक्षुरादिजन्यत्वबाधात्परिशेषान्मनसः सिद्धिः, चाक्षुषादौ चक्षुरादेरिव मानसे मनस एव करणत्वसम्भवादिति भावः ।

अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥ ८५ ॥

तत्र मनसोऽणुत्वे प्रमाणमाह—अयौगपद्यादिति । ज्ञानानां—चाक्षुषरासनादीनाम्, अयौगपद्यम्—एककालोत्पत्तिर्नास्तीत्यनुभवसिद्धम् । तत्र नानेन्द्रियाणां सत्यपि विषयसंनिधाने यत्सम्बन्धादेकेनेन्द्रियेण ज्ञानमुत्पद्यते, यदसम्बन्धाच्च परैर्ज्ञानं नोत्पद्यते, (३)तन्मनः । विभुत्वे चासंनिधानं न सम्भवतीति न विभु मनः । न च तदानीमदृष्टविशेषादुद्बोधविलम्बादेव तज्ज्ञानविलम्ब इति वाच्यम्, तथा सति चक्षुरादीनामप्यकल्पनापत्तेः । न च दीर्घशष्कुलीभक्षणादौ नानावधानभाजां च कथमेकदाऽनेकेन्द्रियजन्यज्ञानमिति वाच्यम्, मनसोऽतिलाघ[illegible]त्वरया नानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्त्या उत्पलशतपत्रभेदादादि[illegible]यौगपद्यप्रत्ययस्य (४)भ्रान्तत्वात् । न च मनसः सङ्कोचविकासशालित्वादुभयोपपत्ति(५)रस्त्विति वाच्यम्, नानावयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्याणुरूपस्यैव मनसः क-

(१) नन्वतिलाघवात्त्वगिन्द्रियस्य घ्राणस्य वा कारणत्वमस्त्वत आह—एवमिति ।

(२) असमवायिकारणसंयोगाश्रयतयेति । भावकार्यस्यासमवायिकारणकत्वादित्यर्थः ।

(३) तत् असंनिधानं मनसो विभुत्वे न सम्भवतीत्यर्थः ।

(४) अव्यवहितकालोत्पत्तिकत्वस्य दोषत्वादिति भावः ।

(५) उभयोपपत्तिरिति । संकोचे एकेन्द्रियमात्रसंबन्धादेकमेव ज्ञानं विकाशे तु नानेन्द्रियैः सम्बन्धाद्युगपन्नानाज्ञानानामुत्पत्तिरिति भावः ।

स्पनादिति संक्षेपः ॥ ८५ ॥

इति द्रव्यपदार्थो व्याख्यातः ॥

---

मीमांसकाभिमतविभुत्वस्य वेदान्त्यभिमतमध्यमपरिमाणवत्त्वस्य च निरासायाणुत्वे प्रमाणमाह–अयौगपद्यादिति। ज्ञानानां–चाक्षुषरासनादीनां, अयौगपद्यात्–एककालोत्पत्तिकत्वाभावात्, तस्य–मनसः अणुत्वं–अणुपरिमाणवत्त्वम्, इह–न्यायवैशेषिकयोर्मते युक्तिसिद्धत्वादिति भावः। तथाहि मध्यमपरिमाणवत्त्वेऽनित्यत्वप्रसङ्गः, न चेष्टापत्तिः, नानावयवतन्नाशकल्पनागौरवप्रसङ्गात्। विभुत्वे तु आत्ममनःसंयोगासम्भवाज्ज्ञानानुत्पत्तिप्रसङ्गः। न च विभुद्वयसंयोगोऽस्त्विति वाच्यम्, तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात्–पुरीतद्व्यतिरिक्तात्ममनःसंयोगस्य सर्वदा विद्यमानत्वात्। अणुत्वे तु यदा मनः पुरीततं प्रविशति तदा सुषुप्तिः, यदा निःसरति तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः। इत्थं च नानावधानभाजां विजातीयज्ञानयौगपद्यप्रत्यय उत्पलशतपत्रभेदप्रत्ययवद् भ्रान्त एव, तत्र मनसा वेगातिशयेन झटित्येव क्रमेण ज्ञानान्तरजननादिति सङ्क्षेपः। सुखादिसाक्षात्कारे करणमित्यनेनैव भोगव्यवस्थोपपत्तये एकैकस्यात्मन एकैकं मन इत्यर्थलाभात् न पृथगुक्तिः ॥ ८५ ॥

इति द्रव्यपदार्थव्याख्या।



द्रव्यं निरूप्य गुणान्निरूपयति—

**अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ।**

अथेत्यादिना । गुणत्वजातौ किं मानमिति चेत्, (१)द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना— निरवच्छिन्नकारणताया असम्भवात् । न हि रूपत्वादिकं सत्ता वा तत्रावच्छेदिका न्यूनाधिकदेशवृत्तित्वात् । अतश्चतुर्विंशत्यनुगतं किञ्चिद्वाच्यं, तदेव गुणत्वमिति ।

द्रव्याश्रिता इति । यद्यपि द्रव्याश्रितत्वं न लक्षणं कर्मादावतिव्याप्तेः, तथापि द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं तदर्थः । भवति हि गुणत्वं द्रव्यत्वव्यापकतावच्छेदकं तद्वत्ता च गुणानामिति । द्रव्यत्वं कर्मत्वं वा न द्रव्यत्वव्यापकतावच्छेदकं, गगनादौ द्रव्यकर्मणोरभावात्, द्रव्यत्वत्वं सामान्यत्वादिकं वा न जातिरिति तद्व्युदासः । निर्गुणा इति । यद्यपि निर्गुणत्वं कर्मादावपि, तथापि सामान्यवत्त्वे सति कर्मान्यत्वे च सति निर्गुणत्वं बोध्यम् । जात्यादीनां न सामान्यवत्त्वं, कर्मणो न कर्मान्यत्वं, द्रव्यस्य न निर्गुणत्वमिति तत्र नातिव्याप्तिः । 'निष्क्रिया' इति स्वरूपकथनं न तु लक्षणं गगनादावतिव्याप्तेः ॥

द्रव्यं निरूप्य गुणान्निरूपयति—अथेत्यादिना । द्रव्याश्रिताः— द्रव्यसमवेताः द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमन्त इति यावत् । निर्गुणा इति । निर्गता गुणा येभ्यस्ते निर्गुणाः निर्गता क्रिया येभ्यस्ते निष्क्रियाः, सामान्यवत्त्वे सति कर्मभिन्नत्वे च सति गुणकर्मशून्या इत्यर्थः । तथाचैतादृशगुणकर्मरहितत्वं गुणानां साधर्म्यमित्यर्थः । आद्यसत्यन्तेन जात्यादौ, द्वितीयेन कर्मणि, तृतीयेन

---

(१) यद्यपि गुणत्वजातौ प्रत्यक्षमेव प्रमाणं रूपादिषु संयुक्तसमवेतसमवायेन गुणत्वप्रत्यक्षसम्भवात्, तथाप्यतीन्द्रियरूपादौ तत्प्रत्यक्षासम्भवेन तत्साधारण्यं गुणत्वस्य न घटत इत्यनुमानप्रदर्शनम् ।

द्रव्येऽतिव्याप्तिनिरासः—जात्यादेर्जातिमत्त्वाभावात् कर्मणः कर्मान्यत्वाभावात् द्रव्यस्य गुणकर्मरहितत्वाभावात्। गुणशून्यत्वं कर्मशून्यत्वं प्राग् व्याख्यातम्।

रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥
द्रवत्वस्नेहवेगाश्च(१) मता मूर्तगुणा अमी।

वेगा इति। वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः। मूर्तगुणा इति। अमूर्तेषु न वर्तन्त इत्यर्थः। लक्षणं तु तावदन्यान्यत्वम्। एवमग्रेऽपि ॥

गुणानां विभज्य साधर्म्यमाह—रूपं रस इति। अत्र द्रवत्वमिव गुरुत्वमपि ग्राह्यम्। वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः। मूर्तगुणा इति। मूर्तगुणत्वमत्रामूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वम्। शून्यान्तेन सङ्ख्यादिव्युदासः। वेगस्थितिस्थापकोपसङ्ग्रहाय संस्कारत्वान्येति। वेगस्थितिस्थापकभावनासाधारणसंस्कारत्वजात्यभावे तु नोपादेयमिदं स्पष्टम् ॥

धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥ ८७ ॥
एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः।

अमूर्तगुणा इति। मूर्तेषु न वर्तन्त इत्यर्थः।

धर्माधर्माविति। बुद्ध्यादयः—बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना मूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वमेतेषां साधर्म्यमित्यर्थः। शून्यान्तेन संयोगादिरूपादिव्युदासः ॥

संख्यादयो विभागान्ता(२) उभयेषां गुणा मताः ॥ ८८ ॥

उभयेषामिति। मूर्तामूर्तगुणा इत्यर्थः ॥ ८६ ॥ ८७ ॥ ८८ ॥

सङ्ख्यादिश्च विभागान्त इति। संख्यापरिमाणपृथक्त्वसंयोगविभागा इत्यर्थः। उभयेषां-मूर्त्तानां, मूर्त्तवृत्ति यदमूर्त्तवृत्ति—तद्वृत्तिगुणत्वव्याप्यजातिमत्त्वं संख्यादीनां साधर्म्यमित्यर्थः। संख्यात्वादिकमादाय लक्षणसमन्वयः ॥ ८६ ॥ ८७ ॥ ८८ ॥

---

(१) द्रवो गुरुत्वं स्नेहश्च-द्रवत्वस्नेहवेगाश्च-इति च पाठान्तरम्। इदमुपलक्षणम्-वेगाश्चेत्यत्र चकारेणानुक्तसमुच्चायकेन गुरुत्वस्य संग्रहः।

(२) संख्यादिश्च विभागान्त इति पाठान्तरम्।

संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा ।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥

अनेकाश्रिता इति । संयोगविभागद्वित्वादीनि द्विवृत्तीनि । त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् ॥ ८९ ॥

द्वित्वादिकेति । आदिपदात् त्रित्वचतुष्ट्वादिपरिग्रहः । द्विपृथक्त्वादय इति । आदिपदात् त्रिपृथक्त्वादिपरिग्रहः । अनेकाश्रिता इति । एकत्वभिन्नसंख्यावद्वृत्तय इत्यर्थः । व्यासज्यवृत्तित्वं स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वं, नानैकत्वसमानाधिकरणगुणत्वं वा साधर्म्यमेतेषामिति यावत् ॥ ८९ ॥

अतः शेषगुणाः सर्वे मता एकैकवृत्तयः(१) ।

अत इति । रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः ॥

अतः शेषा इति । रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः । एकैकवृत्तयः–एकैकमात्रवृत्तयः–स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिन इति यावत्, तेन न द्वित्वादिसाधारण्यम् ।

बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥९०॥
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः ।

बुद्ध्यादीति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इत्यर्थः । स्पर्शान्ताः-रूपरसगन्धस्पर्शा इत्यर्थः । द्रवो–द्रवत्वम् । वैशेषिकाः—विशेषा एव वैशेषिकाः । स्वार्थे ठक् । विशेषगुणा(२) इत्यर्थः ॥

---

(१) एकैकवृत्तयः—स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिन इत्यर्थ ।

(२) विशेषगुणत्वं च भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वम् । अत्र जात्यादावतिव्याप्तिवारणाय विशेष्यम् । गुरुत्वनैमित्तिकद्रवत्वयोर्वारणाय गुरुत्वेत्यादि । सांसिद्धिकद्रवत्वसंग्रहाय अजलेति । संयोगादिवारणाय सत्यन्तम् । भावनायामव्याप्तिवारणायान्यमन्यान्तं सत्यन्तघटकसमवायिविशेषणम् । सत्तादिकमादायासंभववारणाय स्पर्शसंग्रहाय च स्पर्शावृत्तीति ।

विशेषगुणानाह–बुद्ध्यादिषट्केति। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इत्यर्थः। स्पर्शान्ताः–रूपरसगन्धस्पर्शाः, द्रवः–द्रवत्वम्॥

वैशेषिका गुणा इति। विशेषा एव वैशेषिकाः स्वार्थे ठक्। एतेषां विशेषगुणवत्त्वं साधर्म्यमित्यर्थः। तच्च द्रव्यविभाजकोपाधिद्वयसमानाधिकरण—एकद्रव्यविभाजकोपाध्यवच्छिन्नवृत्तिअपरद्रव्यविभाजकोपाध्यवच्छिन्नावृत्त्यवृत्तिजातिमद्गुणत्वमिति यावत्। पृथिवीवायुसमानाधिकरणावृत्तिगुणविभाजकजातिमत्त्वं बुद्धित्वादिमादाय लक्षणसमन्वयः॥

संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा॥ ९१॥
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः।

संख्येति। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः॥

सामान्यगुणानाह–संख्यादिरपरत्वान्त इति। संख्यादिपरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः। द्रवः–द्रवत्वं,असांसिद्धिकः–नैमित्तिकः॥

सामान्यगुणा इति। पदार्थविभाजकोपाधिद्वयसमानाधिकरणवृत्तिजातिमन्तो गुणा इत्यर्थः। भवति हि संख्यात्वादिजातिः पृथिवीत्वजलत्वाद्युपाधिद्वयसमानाधिकरणाद्वित्वादिवृत्तिस्तद्वत्त्वं च सकलसंख्यादेरिति लक्षणसमन्वयः॥

संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च॥ ९२॥
एते तु द्वीन्द्रियग्राह्याः,

द्वीन्द्रियेति। चक्षुषा त्वचापि ग्रहणयोग्यत्वात्।

संख्यादिरपरत्वान्त इति। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः। द्वीन्द्रियग्राह्याः–चक्षुस्त्वगुभयग्रहणयोग्या इत्यर्थः।

अथ स्पर्शान्तशब्दकाः।

बाह्यैकैकेन्द्रियग्राह्याः,

बाह्येति। रूपादीनां चक्षुरादिग्राह्यत्वात्।

स्पर्शान्तशब्दका इति । स्पर्शान्ताश्च शब्दकाश्चेति स्पर्शान्तशब्दकाः, स्पर्शान्ताः–रूपरसगन्धस्पर्शाः,शब्दकाः–शब्दाः, स्वार्थे कः ॥

बाह्यैकैकेन्द्रियग्राह्याः–चक्षुरादेकैकमात्रग्रहणयोग्याः । रूपादीनां चक्षुरादिनैव ग्रहणात् ॥

गुरुत्वादृष्टभावनाः ॥ ९३ ॥

अतीन्द्रिया, विभूनां तु ये स्युर्वैशेषिका गुणाः ।
अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥

विभूनामिति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा इत्यर्थः । अकारणेति । कारणगुणेन कार्ये ये गुणा उत्पद्यन्ते ते कारणगुणपूर्वका रूपादयो वक्ष्यन्ते, बुद्ध्यादयस्तु न तादृशा आत्मादेः–कारणाभावात् ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥

अतीन्द्रिया इति । इन्द्रियाग्राह्या इत्यर्थः । विशेषगुणमध्ये विशेषमाह—विभूनां त्विति । आकाशात्मनां वैशेषिका गुणाः विशेषगुणाः ये स्युः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नशब्दादयः अकारणगुणोत्पन्नाः समवायिकारणसमवेतगुणेन कार्ये ये गुणा उत्पद्यन्ते ते कारणगुणपूर्वका गुणा रूपादयो वक्ष्यन्ते,बुद्ध्यादयस्तु न तादृशाः–आत्मादेः कारणाभावात्, स्वाश्रयसमवायिसमवेतगुणाजन्यत्वमेतेषांसाधर्म्यमिति फलितम् ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥

अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् ।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ।

अपाकजास्त्विति । पाकजरूपादीनां कारणगुणपूर्वकत्वाभावात् अपाकजा इत्युक्तम् । तथाविधम्–अपाकजम् । तथैकत्वमपि बोध्यम् ।

अपाकजाश्चेति । पाकजरूपादीनां कारणगुणपूर्वकत्वाभावादपाकजा इत्युक्तम् । स्पर्शान्ता इति । जन्या एते तादृशा इति भावः । तेन जलाण्वादिवृत्तीनां तथात्वाभावेऽपि न हानिः । तथाविधं–अपाकजम् ॥

कारणगुणोद्भवा इति । स्वाश्रयसमवायिसमवेतगुणजन्या इत्यर्थः ॥

संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥

संयोगश्चेति । कर्मजन्यत्वं यद्यपि न साधर्म्यं–घटादावतिव्याप्तेः, संयोगजसंयोगेऽव्याप्तेश्च, तथापि कर्मजन्यवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम् । एवमन्यत्राप्यूह्यम् ॥ ९५ ॥ ९६ ॥

कर्मजा इति । कर्मजन्यवृत्तिगुणत्वव्याप्यजातिमन्त इत्यर्थः तेन न संयोगजसंयोगादावव्याप्तिः ॥ ९५ ॥ ९६ ॥

स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ।
भवेदसमवायित्वम्,

स्पर्शान्तेति । एकपृथक्त्वमित्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च ग्राह्यम् । पृथक्त्वपदेन चैकपृथक्त्वम् । भवेदसमवायित्वमिति । घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति । एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वम् । शब्दस्यापि द्वितीयशब्दं प्रति । एवं स्थितिस्थापकैकपृथक्त्वयोरपि ज्ञेयम् ॥

भवेदसमवायित्वमिति । घटादिगतरूपरसगन्धस्पर्शाः कपालादिगतरूपादिभ्यो भवन्ति, एवं परिमाणादिशब्दोऽप्युत्तरोत्तरः पूर्वपूर्वतो भवतीत्येषामसमवायिकारणत्वं साधर्म्यमित्यर्थः । तत्त्वं चासमवायिकारणवृत्तिगुणविभाजकोपाधिमत्त्वं, तेन घटरूपादीनामसमवायित्वाभावेपि नाव्याप्तिः ॥

अथ वैशेषिके गुणे ॥ ९७ ॥
आत्मनः स्यान्निमित्तत्वम् ।

निमित्तत्वमिति । बुद्ध्यादीनामिच्छादिनिमित्तत्वादिति भावः ॥

अथेति । आत्मनो वैशेषिके गुणे निमित्तत्वं स्यादित्यन्वयः । आत्मविशेषगुणानां निमित्तकारणत्वं साधर्म्यमिति यावत् ॥

उष्णस्पर्शगुरुत्वयोः ।
वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥
द्विधैव कारणत्वं स्यात्,

द्विधैवेति । असमवायिकारणत्वं निमित्तकारणत्वं च । तथाहि—उष्णस्पर्श उष्णस्पर्शस्यासमवायिकारणं, पाकजे निमित्तम् । गुरुत्वं गुरुत्वपतनयोरसमवायिकारणं, प्रतिघाते निमित्तम् । वेगो वेगस्पन्दनयोरसमवायी, अभिघाते निमित्तम् । द्रवत्वं द्रवत्वस्पन्दनयोरसमवायि, सङ्ग्रहे निमित्तम् । भेरीदण्डसंयोगः शब्दे निमित्तं भेर्याकाशसंयोगोऽसमवायी । वंशदलद्वयविभागः शब्दे निमित्तं वंशदलाकाशविभागोऽसमवायीति ॥

द्विधैव कारणत्वं स्यादिति । असमवायिकारणत्वं निमित्तकारणत्वं चेत्यर्थः । तथाहि—उष्णस्पर्श उष्णस्पर्शस्यासमवायी पाकजे निमित्तं, गुरुत्वं गुरुत्वपतनयोरसमवायि प्रतिघाते निमित्तं, वेगो वेगस्पन्दनयोरसमवायी अभिघाते निमित्तं, द्रवत्वं द्रवत्वस्पन्दनयोरसमवायि सङ्ग्रहे निमित्तं, भेरीदण्डसंयोगः शब्दनिमित्तं भेर्याकाशसंयोगोऽसमवायी, वंशदलद्वयविभागः शब्दे निमित्तं, वंशदलाकाशविभागोऽसमवायीति ।

अथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥
प्रादेशिकोऽव्याप्यवृत्तिः ॥ ९७ ॥ ९८ ॥ ९९ ॥

प्रादेशिकः—अव्याप्यवृत्तिः, तत्त्वं प्राग्व्याख्यातम् । विभुगुणः संख्यादिरपीत्यत उक्तं वैशेषिक इति । विशेष एव वैशेषिकः संख्यादिकं तु सामान्यगुण इति भावः ॥

संयोगादिद्वयं—संयोगविभागौ, तथा—अव्याप्यवृत्तिः सामान्यतः ॥ ९७ ॥ ९८ ॥ ९९ ॥

चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।
चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥

चक्षुरिति । रूपत्वजातिस्तु प्रत्यक्षसिद्धा । रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेन्मास्तु रूपशब्दप्रयोगः, तथापि नीलपीतादिष्वनुगतजातिविशेषोऽनुभवसिद्ध एव । रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्ण इति वर्णशब्दोल्लेखिनी प्रतीतिरस्त्येव । एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम् । न चैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिकं न जातिरिति वाच्यम्, नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात्, अन्यथा एकनीलनाशे जगदनीलमापद्येत । न च नीलसमवायरक्तसमवाययोरेवोत्पादविषयकोऽसौ प्रत्यय इति वाच्यम्, प्रतीत्या समवायानुल्लेखात् । न च स एवायं नील इति प्रत्ययाल्लाघवाच्चैक्यमिति वाच्यम्, प्रत्यक्षस्य तज्जातीयविषयकत्वात्सैवेयं गुर्जरीतिवत् । लाघवं तु प्रत्यक्षबाधितम्, अन्यथा घटादीनामप्यैक्यप्रसङ्गादुत्पादविनाशबुद्धेः समवायालम्बनत्वापत्तेरिति । एतेन रसादिकमपि व्याख्यातम् । (१)चक्षुर्ग्राह्यमिति । चक्षुर्ग्राह्यविशेषगुण इत्यर्थः । एवमग्रेऽपि । द्रव्यादेरिति । उपलम्भकमुपलब्धिकारणम् । इदमेव विवृणोति—चक्षुष इति । द्रव्यगुणकर्मसामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम् । शुक्लादिकमनेकधेति । तच्च रूपं शुक्लनीलपीतरक्तहरितकपिशकर्बुरादिभेदादनेकप्रकारकं भवति । ननु कथं कर्बुरमतिरिक्तरूपं भवति । इत्थं—नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीरूपो, अप्रत्यक्षत्वप्रसङ्गात् । नापि व्याप्यवृत्तिनीलादिरूपमुत्पद्यते, पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात् । नाप्यव्याप्यवृत्ति नीलादिकमुत्पद्यते, व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात् । तस्मान्नानाजातीयरूपैरवयाविनि विजातीयं चित्रं रूपमारभ्यते । अत एव 'एकं चित्रम्' इत्यनुभवोऽपि । नानारूपकल्पने गौरवात् । इत्थं च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनादवय-

(१) चक्षुर्ग्राह्यमित्यस्येत्यर्थः । तेन चक्षुरितीति प्राक्प्रतीकधारणेऽपि न पौनरुक्त्यम् ।

विनि न पीताद्युत्पत्तिः । एतेन स्पर्शोऽपि व्याख्यातः । रसादिकमपि नाव्याप्यवृत्ति, किन्तु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः । तत्र रसनयाऽवयवरस एव गृह्यते रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावादवयविनो नीरसत्वेऽपि क्षतेरभावात् । नव्यास्तु तत्राव्याप्यवृत्त्येव नाना रूपं, नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात् । अत एव—

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

इत्यादिशास्त्रमप्युपपद्यते । न च व्याप्याव्याप्यवृत्तिजातीययोर्द्वयोर्विरोधः, मानाभावात् । न च लाघवादेकं रूपम् , अनुभवविरोधात् । अन्यथा घटादेरपि लाघवादैक्यं स्यात् । एतेन स्पर्शादिकमपि व्याख्यातमिति वदन्ति ॥ १०० ॥

साधर्म्यादिकमुक्त्वा क्रमेणैकैकं विशिष्य निरूपयितुमुपक्रमते चक्षुर्ग्राह्यमिति । सावधारणमिदं वाक्यं चक्षुर्मात्रग्राह्यमित्यर्थः । गुणप्रस्तावाद्गुण इति विशेषणं लभ्यते, ततश्चक्षुर्ग्राह्यो गुणो रूपमिति लक्षणं सिद्धम् । संख्यादावतिव्याप्तिवारणाय मात्रपदम् । रूपत्वेऽतिव्याप्तिवारणाय गुण इति । न चातीन्द्रियरूपेऽव्याप्तिः, चक्षुर्मात्रग्राह्यगुणवृत्तिजातिमत्त्वे तात्पर्यात् । चक्षुर्मात्रग्राह्येति जातिविशेषणाच्च संयोगविशेषादावतिव्याप्तिः । लक्ष्यतावच्छेदकं तत्र रूपं रूपमित्यनुगतमतिसिद्धं रूपत्वं जातिरिति संक्षेपः । उपयोगमाह- द्रव्यगुणकर्मसामान्यादीनां उपलम्भकं साक्षात्परम्परया वा चाक्षुषजनकम् । यादृशकारणत्वं तदाह—चक्षुष इति । चाक्षुषजनने तेजोवच्चक्षुषः सहकारीत्यर्थः । विभजते—शुक्लादिकमिति । शुक्लमादिर्यस्य नीलादेस्तच्छुक्लादिकं अनेकधा शुक्लनीलपीतरक्तकृष्णकपिलचित्रभेदात्सप्तप्रकारमित्यर्थः । नन्वव्याप्यवृत्तिनीलपीतादिसमुदाय एव चित्रं न त्वतिरिक्तमिति चेन्न, रूपस्य व्याप्यवृत्तित्वनियमात् तत्समुदायस्य चित्रत्वायोगात् । न च तत्र व्याप्यवृत्त्येव नीलादिकमिति

युक्तं वक्तुं–पीतावच्छेदेन नीलस्य नीलावच्छेदेन पीतस्योपलम्भ-प्रसङ्गात् । अवयवगतपीतादेरेवावयविनि प्रतीतिः अवयवी तु तत्र नीरूप इत्यपि न युक्तं–अवयविनो नीरूपत्वेऽप्रत्यक्षत्वप्रसङ्गात् । न च लौकिकविषयतासम्बन्धेनावयविचाक्षुषं प्रति स्वाश्रयसमवेतत्वसम्बन्धेनावयवगतमेव रूपादिकं प्रयोजकमिति वाच्यम् ,गौरवात् । तस्मात्प्रत्यक्षत्वान्यथानुपपत्त्याऽवयविन्यतिरिक्तचित्रसिद्धिः ॥१००॥

जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् ।

जलादीति । जलपरमाणौ तेजःपरमाणौ च रूपं नित्यम् । पृथिवीपरमाणुरूपं तु न नित्यं तत्र पाकेन रूपान्तरोत्पत्तेः । नहि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते । न हि रक्तकपालस्य कपालिका नीलावयवा भवति । एवं क्रमेण परमाणावपि पाकसिद्धेः । अन्यज्जलतेजःपरमाणुरूपभिन्नं रूपं, सहेतुकं—जन्यम् ॥

जलादीति । जलपरमाणौ तेजःपरमाणौ च तत् रूपं नित्यं-प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगि, अन्यत् द्व्यणुकादिवृत्ति पृथिवीवृत्ति च सर्वं सहेतुकं जन्यं अतो न नित्यमित्यर्थः । पृथिवीपरमाणुषु पाकेन द्व्यणुकादौ परमाणुरूपादिना रूपोत्पत्तेर्जन्यस्य तस्य क्वचित्पाकेन क्वचिदवयवनाशाच्च नाश इति तत्सर्वमनित्यमेवेति दिक् ।

रसं निरूपयति—

रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥
सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।

रसस्त्विति । सहकारीति । रासनज्ञाने रसः कारणमित्यर्थः । पूर्ववदिति । जलपरमाणौ रसो नित्योऽन्यः सर्वोऽपि रसोऽनित्य इत्यर्थः ।

रसं लक्षयति–रसस्त्विति । गुणप्रस्तावाद्गुण इति विशेषणं ज्ञेयम्, तेन रसनग्राह्यो गुणो रस इति लक्षणं सिद्धम् । रसत्वेऽतिव्याप्तिवारणाय गुणेति । लक्ष्यतावच्छेदकं त्वत्र प्रत्यक्षसिद्धं रसत्वं जातिः । विभजते–मधुरादीति । मधुर आदिर्यस्य तिक्तादेः स मधुरादिः,

अनेकधा-मधुराम्ललवणकटुकषायतिक्तभेदात् षट्प्रकार इत्यर्थः। तत्र मधुरं सितादि, अम्लं तिन्तिण्यादि, लवणं सैन्धवादि, कटु मरीच्यादि, कषायो हरीतक्यादिः, तिक्तं निम्बादि, एतत्सर्वं पृथिव्यामेव जले तु मधुरमेवेति दिक् ॥

उपयोगमाह-सहकारीति। रसज्ञायाः रसनेन्द्रियस्य रासनजनने सहकारीत्यर्थः। पूर्ववदिति। जलपरमाणौ नित्यः अन्यः सर्वोऽप्यनित्य इत्यर्थः।

गन्धं निरूपयति—

घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥
सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः ॥

घ्राणग्राह्य इति। उपकारक इति। घ्राणजन्यज्ञाने सहकारिकारणमित्यर्थः। सर्वोऽपि गन्धोऽनित्य एव ॥ १०१ ॥ १०२ ॥

गन्धं लक्षयति-घ्राणग्राह्येति। गुणप्रस्तावाद् गुण इति ज्ञेयम्। घ्राणग्राह्यो गुणो गन्ध इत्यर्थः। गन्धत्वेऽतिव्याप्तिवारणाय गुण इति। अतीन्द्रियगन्धेऽव्याप्तिवारणाय जातिघटितं बोध्यम्। लक्ष्यतावच्छेदकं त्वत्र प्रत्यक्षसिद्धं गन्धत्वं जातिः। उपकारक इति। घ्राणजन्यज्ञाने कारणमित्यर्थः ॥ १०१ ॥ १०२ ॥

विभजते-सौरभं चासौरभं चेति। सर्वोपि गन्धोऽनित्य एव ॥

स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥

स्पर्श इति। उपकारक इति। स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः ॥ १०३ ॥

स्पर्शस्त्वगिन्द्रियेति। सावधारणमिदं वाक्यम्। त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्श इत्यर्थः। संख्यादावतिव्याप्तिवारणाय मात्रपदम्। स्पर्शत्वेऽतिव्याप्तिवारणाय गुणपदम्। न चातीन्द्रियस्पर्शेऽव्याप्तिः-त्वगिन्द्रियमात्रग्राह्यगुणवृत्तिजातिमत्त्वे तात्पर्यात्। अत्रापि त्वगिन्द्रियमात्रग्राह्येतिजातिविशेषणात् संयोगविशेषादावतिव्याप्तिरिति संक्षेपः। लक्ष्यतावच्छेदकमत्र प्रत्यक्षसिद्धं स्पर्शत्वजातिः। उपयोगमाह-त्वचः स्यादुपकारक इति। त्वगिन्द्रियजन्यप्रत्यक्षे कारणमित्यर्थः॥१०३॥

अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः ।
काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥

अनुष्णाशीतेति । पृथिव्यां वायौ च स्पर्शोऽनुष्णाशीतः जले शीतः तेजस्युष्णः । काठिन्येति । कठिनसुकुमारस्पर्शौ पृथिव्यामेवेत्यर्थः। कठिनत्वादिकं तु न संयोगनिष्ठो जातिविशेषः, चक्षुर्ग्राह्यत्वापत्तेः । पूर्ववदिति । जलतेजोवायुपरमाणुस्पर्शा नित्यास्ताद्भिन्नास्त्वनित्या इत्यर्थः ॥ १०४ ॥

विभजते–अनुष्णाशीतेति। न उष्णोऽनुष्णः न शीतोऽशीतः अनुष्णश्चासावशीतश्चेत्यनुष्णाशीतः, अनुष्णाशीतश्च शीतश्चोष्णश्चानुष्णाशीतशीतोष्णास्तेषां भेदात्त्रिविध इत्यर्थः। तत्रानुष्णशीतः पृथिवीवाय्वोः शीतो जले उष्णस्तेजसि ॥

काठिन्यादीति। काठिन्यमादिर्यस्य तत् कठिनत्वं कोमलत्वं चेत्यर्थः। न च कठिनत्वकोमलत्वे संयोगविशेषौ–चाक्षुषत्वापत्तेः। पूर्ववादिति। जलतेजोवायुपरमाणुस्पर्शा नित्यास्तद्भिन्नस्पर्शास्त्वनित्या इत्यर्थः ॥ १०४ ॥

एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित् ।

एतेषामिति । एतेषां रूपरसगन्धस्पर्शानाम् । नान्यत्रेति । पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिरग्निसंयोगादुपलभ्यते । न हि शतधापि ध्मायमाने जले रूपादिकं परिवर्तते । नीरे सौरभमौष्ण्यं चान्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते–पवनपृथिव्योः शीतस्पर्शादिवत्।

एतेषां रूपरसगन्धस्पर्शानां पाकजत्वं तु विजातीयतेजःसंयोगजन्यत्वं तु क्षितौ पृथिव्यामेव–पाकेन रसालफलादौ पूर्वरूपादितो विलक्षणरूपादेरानुभविकत्वात्। न च तत्परमाणौ पूर्वरूपादौ सति सम्भवति, कारणरूपादिना विलक्षणरूपादिकाले रसालफलादौ पूर्वरूपादिसजातीयरूपाद्यापत्तेः, अतः पाकेन पृथिवीपरमाण्वादौ रूपादिनाशोत्पादौ युक्तौ, नान्यत्र न जलतेजोवायुषु मानाभावादिति भावः ॥

तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥ १०५ ॥

तत्रापि पृथिवीष्वपि मध्ये परमाणावेव रूपादीनां पाक इति वैशेषिका वदन्ति । तेषामयमाशयः—अवयविनावष्टब्धेष्ववयवेषु पाको न सम्भवति, परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः । पुनश्च पक्वपरमाणुसंयोगाद्व्यणुकादिक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः । तेजसामतिशयितवेगवशात्पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति । अत्र व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्यार्थं क्षणप्रक्रिया । तत्र विभागजविभागानङ्गीकारे(१) नवक्षणा । तदङ्गीकारे तु विभागः किञ्चित्सापेक्षो विभागं जनयेत् निरपेक्षस्य तत्त्वे कर्मत्वं स्यात् । संयोगविभागयोरनपेक्षं कारणं कर्मेति १।१।१७ वैशेषिकसूत्रम् । स्वोत्तरोत्पन्नभावान्तरानपेक्षत्वं तस्यार्थः, अन्यथा कर्मणोऽप्युत्तरसंयोगोत्पत्तौ पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यात् । तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदैकादशक्षणा ।

तथाहि अथ नवक्षणा—वह्निसंयोगात्परमाणौ कर्म । ततः परमाण्वन्तरेण विभागः । तत आरम्भकसंयोगनाशः । ततो व्यणुकनाशः । १ । ततः परमाणौ श्यामादिनाशः । २ । ततो रक्ताद्युत्पत्तिः । ३ । ततो द्रव्यारम्भानुगुणा क्रिया । ४ । ततो विभागः । ५ । ततः पूर्वसंयोगनाशः । ६ । तत आरम्भकसंयोगः । ७ । ततो व्यणुकोत्पत्तिः । ८ । ततो रक्ताद्युत्पत्तिः । ९ । ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणा क्रियाऽस्त्विति चेन्न । न । अग्निसंयुक्ते परमाणौ यत्कर्म तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च परमाणौ क्रियान्तराभावात्—कर्मवति कर्मान्तरानुत्पत्तेर्निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च । तथापि परमाणौ श्यामादिनिवृत्तिसमकालं

(१) कारणाकारणविभागगात् कार्याकार्यविभागवत्कारणमात्रविभागात् कारणाकारणविभागानङ्गीकारे इत्यर्थः । द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियायास्तदनारम्भकसंयोगप्रतिद्वन्द्विविभागाजनकत्वनियमे मानाभावादिति भावः ।

रक्ताद्युत्पत्तिः स्यादिति चेत् । न । पूर्वरूपादिध्वंसस्यापि रूपान्तरे हेतुत्वात् । इति नवक्षणा ॥

अथ दशक्षणा । सा च—आरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात् । तथाहि—वह्निसंयोगात् द्व्यणुकारम्भके परमाणौ कर्म, ततो विभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशविभागजविभागौ(१) । १ । ततः श्यामनाशपूर्वसंयोगनाशौ । २ । ततो रक्तोत्पत्त्युत्तरसंयोगौ । ३ । ततो वह्निनोदनजन्यपरमाणुकर्मणो नाशः ।४। ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानुगुणा क्रिया ।५। ततो विभागः।६। ततः पूर्वसंयोगनाशः।७। तत आरम्भकसंयोगः ।८। ततो द्व्यणुकोत्पत्तिः । ९ । ततो रक्तोत्पत्तिः ।१०। इति दशक्षणा ॥

अथैकादशक्षणा—वह्निसंयोगात्परमाणौ कर्म, ततो विभागः, ततो द्रव्यारम्भकसंयोगनाशः, ततो द्व्यणुकनाशः । १ । ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजाविभागश्यामनाशौ । २ । ततः पूर्वसंयोगनाशरक्तोत्पत्ती । ३ । तत उत्तरदेशसंयोगः । ४ । ततो वह्निनोदनजन्यः परमाणौ कर्मनाशः । ५ । ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानुगुण्या क्रिया । ६ । ततो विभागः । ७ । ततः पूर्वसंयोगनाशः ।८। ततो द्रव्यारम्भकोत्तरसंयोगः । ९ । ततो द्व्यणुकोत्पत्तिः । १० । ततो रक्ताद्युत्पत्तिः । ११ । इति । मध्यमशब्दवेदकस्मादग्निसंयोगान्न रूपनाशोत्पादो तावत्कालमेकस्याग्नेरस्थिरत्वात् । किञ्च नाशक एव यद्युत्पादकः, तदा नष्टे रूपादावग्निनाशे नीरूपश्चिरं परमाणुः स्यात् । उत्पादकश्चेन्नाशकः, तदा रक्तोत्पत्तौ तदग्निनाशे रक्ततरता न स्यात् ।(२)

(१) आरम्भकसंयोगनाशस्य तृतीयक्षण एवोत्पन्नतया चतुर्थक्षणे परमाण्वाकाशविभागः संभवतीति भाव. ।

(२) अयं भाव: । रूपनाशकतावच्छेदकं विलक्षणाग्निसंयोगत्वं तदेव यदि उत्पादकतावच्छेदकं तदा कार्यतावच्छेदकमपि सामान्यत: पृथिवीपरमाणुरूपत्वं त्वया वाच्यम् । तथा सति क्वचिद्रक्ततरता क्वचिच्च रक्ततमता परमाणौ न स्यात् । कार्यवैचित्र्यस्य कारणतावच्छेदकभेदाधीनत्वात् इति भावः ।

इत्येकादशक्षणा ॥

अथ परमाण्वन्तरे कर्मचिन्तनात्पञ्चमादिक्षणेऽपि गुणोत्पत्तिः । तथाहि—एकत्र परमाणौ कर्म, ततो विभागः, तत आरम्भकसंयोग नाशपरमाण्वन्तरकर्मणी । ततस्तु द्व्यणुकनाशः । परमाण्वन्तरकर्मज-न्यविभाग इत्येकः कालः । १ । ततः श्यामादिनाशः, विभागाच्च-पूर्वसंयोगनाशश्चेत्येकः कालः । ३ । अथ द्व्यणुकोत्पत्तिः । ४ । ततो रक्तोत्पत्तिः । ५ । इति पञ्चक्षणा ॥

द्रव्यनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात्षष्ठे गुणोत्पत्तिः तथा-हि—परमाणुकर्मणा परमाण्वन्तरविभागः, तत आरम्भकसंयोगनाशः । अथ द्व्यणुकनाशपरमाण्वन्तरकर्मणी । १ । अथ श्यामादिनाशः, पर-माण्वन्तरे कर्मजो विभागश्च । २ । ततो रक्तोत्पत्तिः परमाण्वन्तरे पूर्व-संयोगनाशश्च । ३ । ततः परमाण्वन्तरसंयोगः । ४ । ततो द्व्यणुको-त्पत्तिः । ५ । अथ रक्तोत्पत्तिः । ६ । इति षट्क्षणा ॥

एवं श्यामनाशक्षणे परमाण्वन्तरे कर्मचिन्तनात्सप्तक्षणा। तथाहि—परमाणौ कर्म, ततः परमाण्वन्तरेण विभागः, तत आरम्भकसंयो-गनाशः । ततो द्व्यणुकनाशः । १ । ततः श्यामादिनाशपरमाण्वन्तर-कर्मणी । २ । ततो रक्तोत्पत्तिः, परमाण्वन्तरे कर्मजविभागश्च । ३ । ततः परमाण्वन्तरेण पूर्वसंयोगनाशः । ४ । ततः परमाण्वन्तरे संयोगः । ५ । ततो द्व्यणुकोत्पत्तिः । ६ । ततो रक्तोत्पत्तिः । ७ ॥ इति । सप्तक्षणा ॥

एवं रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्मचिन्तनादष्टक्षणा । तथा-हि—परमाणौ कर्म, ततः परमाण्वन्तरविभागः, तत आरम्भकसंयो-गनाशः, ततो द्व्यणुकनाशः । १ । ततः श्यामनाशः । २ । ततो रक्तो-त्पत्तिपरमाण्वन्तरकर्मणी । ३ । ततः परमाण्वन्तरे कर्मजविभागः । ४ । ततः पूर्वसंयोगनाशः । ५ । ततः परमाण्वन्तरसंयोगः । ६ । ततो द्व्यणुकोत्पत्तिः । ७ । अथ रक्तोत्पत्तिः । इत्यष्टक्षणा ॥ १०५ ॥

पीलुपाकवादिनां वैशेषिकाणां–मतमाह तत्रापीति। पृथिव्यामपीत्यर्थः। परमाणौ–परमाणावेव, पाकः–रूपाद्यसमवायी तेजःसंयोगः। अयं तेषां निष्कर्षः–पाकनिक्षिप्ते घटादाविव घटादिमध्येपि रूपरसादिकं विजातीयमनुभवसिद्धम्। तच्च तत्राग्निसंयोगजत्वं ज्ञापयति अग्निसंयोगस्यैव पाकत्वात्, तथाच वह्न्यभिघातात्तत्र परमाणवः पच्यन्ते। तत्र कदाचित्समानादग्निसंयोगादेकजातीयं विलक्षणाच्च परस्परं विलक्षणरूपमुत्पद्यते। पुनः प्राणिकर्मसहकृत एव भगवान् सृष्ट्यादाविव द्व्यणुकादिक्रमेण पूर्ववदेव करोति। तथाच परमाणुरूपात् द्व्यणुके तद्रूपात् त्र्यणुके इति कुलालनिर्मितघट इव तत्रापि रूपाद्युत्पत्तिरिति सिद्धम् पाकात् परमाणावेव रूपादयो न द्व्यणुकादाविति१०५॥

नैयायिकानां तु नये द्व्यणुकादावपीष्यते।

नैयायिकानामिति। नैयायिकानां मते द्व्यणुकादाववयविन्यपि पाको भवति। तेषामयमाशयः–अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरुध्यते। अनन्तावयवितन्नाशकल्पने गौरवात्। इत्थंच सोऽयं घट इत्यादिप्रत्यभिज्ञापि सङ्गच्छते। यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियत इति ॥

घटादावेव पाकाभ्युपगमे कठिनघटादिमध्यभागे वह्न्यप्रवेशान्मध्ये पूर्वरूपादिनाशरूपान्तरोत्पत्ती न स्यातामिति। तन्न युक्तं–सर्वेषामवयविनां सच्छिद्रत्वात् छिद्रद्वारा प्रविष्टवन्हिना मध्येपि भाण्डान्तर्गतनोदनादेरिव पाकसम्भवाच्च नानावयविनाशोत्पत्त्यादि कल्प्यते गौरवात्। किन्तु पूर्वघटस्य नाशं विनैवावयविन्यवयवेषु च परमाणुपर्यन्तेषु पाकाद्युपगद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनां नैय्यायिकानां मतमाह नैय्यायिकानां त्विति। द्व्यणुकादावित्यादिपदात् घटान्तावयविपरिग्रहः। अवयविनाशकल्पनायां मानाभावादवयविन्यपि पाकोऽङ्गीक्रियत इति भावः। उभयमतेऽपि पृथिवीपरमाणुषु रूपमनित्यमिति भावः।

संख्यां निरूपयितुमाह—

गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥ १०६ ॥

गणनेति। गणनाव्यवहारासाधारणकारणं संख्येत्यर्थः ॥ १०६ ॥

संख्यां लक्षयति गणनेति एकत्वादिव्यवहारासाधारणकारणं संख्येत्यर्थः। लक्ष्यतावच्छेदकमत्र एकत्वादौ संख्येत्यनुगतप्रतीतिसिद्ध संख्यात्वजातिः ॥ १०६ ॥

नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।
द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥

नित्येष्विति । नित्येषु–परमाण्वादिषु एकत्वं नित्यम् । अनित्ये-घटादावेकत्वमनित्यमित्यर्थः । (१)द्वित्वादयो व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्याः ॥ १०७ ॥

नित्येषु नित्यमिति । नित्येषु परमाण्वादिषु एकत्वं नित्यं, अनित्ये घटादावनित्यमेकत्वमित्यर्थः ।

द्वित्वादय इति । एकत्वान्यसंख्यामात्रमपेक्षाबुद्धिरूपनिमित्तकारणजन्यमित्यर्थः । असमवायिकरणं तु द्वित्वं प्रति समवायिगतं यावदेकत्वं बोध्यम् ॥ १०७ ॥

अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः ।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ १०८ ॥

अनेकेति । यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्तते, तथाप्येको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसद्भावाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते । प्रथममपेक्षाबुद्धिः, ततो द्वित्वोत्पत्तिः, ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकम् , ततो द्वित्वत्वविशिष्टप्रत्यक्षम् , अपेक्षाबुद्धिनाशश्च, ततो द्वित्वनाश इति । यद्यपि ज्ञानानां द्विक्षणमात्रस्थायित्वं–योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात् , तथाप्यपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं कल्प्यते । अन्यथा निर्विकल्पककालेऽपेक्षाबुद्धिनाशानन्तरं द्वित्वस्यैव नाशः स्यात्;न तु द्वित्ववत्प्रत्यक्षं–तदानीं विषयाभावात् ,

---

(१) द्वित्वादय इति । एकत्वान्यसंख्यामात्रमपेक्षाबुद्धिरूपनिमित्तकारणजन्यमित्यर्थः । असमवायिकारणं तु द्वित्वादिकं प्रति समवायिकारणगतयावदेकत्वम् इति बोध्यम्।

(१)विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात्। तस्माद्द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते। न चापेक्षाबुद्धिनाशात्कथं द्वित्वनाश इति वाच्यम्, कालान्तरे द्वित्वप्रत्यक्षाभावात्, अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशात्तन्नाश इति कल्पनात्। अत एव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते। न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षे कारणत्वमस्त्विति वाच्यम्, लाघवेन द्वित्वं प्रत्येव कारणत्वस्योचितत्वात्। अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनाम्, सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिः, ब्रह्माण्डान्तरवर्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति ॥ १०८ ॥

अनेकेति। उभयाश्रयपर्याप्तौ इत्यर्थः। अत उभयादेः प्रत्येकानतिरिक्ततया प्रत्येकमपि द्वित्वस्य सत्त्वेऽप्येको द्वाविति प्रत्ययस्य नापत्तिः। पर्याप्त्याख्यसम्बन्धेन द्वित्वस्य प्रत्येकमभावात् एको न द्वाविति प्रतीतेः, अत एवैते व्यासज्यवृत्तय उच्यन्ते इत्यास्तां विस्तरः॥

अपेक्षाबुद्धिनाशाच्चेति। चतुर्थक्षणे अपेक्षाबुद्धिनाशात्पञ्चमे क्षणे द्वित्वादीनां नाश इत्यर्थः। तथाहि प्रथममपेक्षाबुद्धिः, ततो द्वित्वोत्पत्तिः,ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पकात्मकं, ततो द्वित्वत्वविशिष्टप्रत्यक्षं अपेक्षाबुद्धिनाशश्च, ततो द्वित्वनाश इति॥ १०८ ॥

अपेक्षाबुद्धिः केत्यत आह—

अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते।

अनेकेति। अयमेकोऽयमेक इत्याकारिका इत्यर्थः।

इदं तु बोध्यम्। यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते,यथा सेनावनादाविति कन्दलीकारः। आचार्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते, तथाच त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्ना-

(१) ननु तदानीं द्वित्वाभावेऽपि तत्पूर्वक्षणे द्वित्वसत्त्वान्न द्वित्वप्रत्यक्षानुपपत्तिरत आह—विद्यमानस्यैवेति। 'संबद्धं वर्तमानं च गृह्यते चक्षुरादिना' इत्यनुरोधाल्लौकिकप्रत्यक्षं प्रति द्वित्वादेर्विषयस्य कार्यसहभावेन हेतुत्वादिति भावः।

तिरिच्यंते । सेनावनादावुत्पन्नेऽपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात्(१)। इत्थं चेतो बहुतरेयं सेनेति प्रतीतिरुपपद्यते(२)। बहुत्वस्य संख्यान्तरत्वे तु तत्तारतम्याभावान्नोपपद्येतेत्यवधेयम् ॥

अपेक्षाबुद्धिः का ? तत्राह–अनेकेति। अयमेक अयमेक इत्याद्याकारिका या तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिनी बुद्धिः साऽपेक्षाबुद्धिरित्यर्थः। अत एकत्वांशे निर्द्धर्मितावच्छेदकत्वज्ञानान्न द्वित्वाद्यापत्तिरिति बोध्यम्। नन्वस्याः किमिति द्वित्वं प्रति हेतुत्वं कल्प्यत इति चेत्,कालान्तरे द्वित्वप्रत्यक्षवारणायेति गृहाण, अत एव तन्नाशोपीति दिक्।

पारिमाणं निरूपयति—

परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥

परिमाणमिति । परिमितिव्यवहारासाधारणं कारणं परिमाणमित्यर्थः ॥ १०९ ॥

परिमाणं लक्षयति–परिमाणमिति। परिमितिव्यवहारासाधारणकरणं परिमाणमित्यर्थः। लक्ष्यतावच्छेदकं परिमाणत्वं जातिः परिमाणमित्यनुभवसिद्धा ॥ १०९ ॥

अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।

तच्चतुर्विधं—अणु महद् दीर्घं ह्रस्वं चेति ।

विभजते–अण्विति। भावप्रधानोऽयं निर्देशः—अणुत्वं दीर्घत्वं महत्त्वं ह्रस्वत्वं चेत्यर्थः।

अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥

(१) नियतानेकैकत्वज्ञानाभावादित्यर्थः । नियतानेकैकत्वज्ञानस्य त्रित्वोत्पत्तिकारणत्वेपि त्रित्वांशे त्रित्वत्वप्रकारकप्रत्यक्षे नियतानेकैकत्वज्ञानस्यैव हेतुतया तं विना न त्रित्वत्वप्रकारकप्रत्यक्षमिति भाव· ।

(२) उपपद्यते इति। इतो बहुतरेत्यत्र बहुत्वे स्वसजातीयनिरूपितोत्कर्षः प्रतीयते तथा च चतुष्ट्वादिरूपे बहुत्वे त्रित्वादिरूपस्वसजातीयनिरूपितोत्कर्षस्य सत्त्वात्तादृशप्रतीतिरुपपद्यत इति भावः।

संख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं

तत्—परिमाणम् । नित्यमित्यत्र परिमाणमित्यनुषज्यते । जायत इत्यत्रापि परिमाणमित्यनुवर्तते । अनित्यमिति पूर्वेणान्वितम् । तथा चानित्यपरिमाणं संख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः ॥

तत्—परिमाणं, नित्यमित्यत्र परिमाणमित्यनुषज्यते ॥
जायत इत्यत्रापि परिमाणमित्यनुषज्यते ।
अनित्यमिति पूर्वेणान्वितम्, तथाचानित्यं परिमाणं संख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः ।

तत्र संख्याजन्यमुदाहरति—

द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥ १११ ॥

द्व्यणुकाविति । द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणं–परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात् । द्व्यणुकस्याणुपरिमाणं तु परमाण्वणुत्वापेक्षया नोत्कृष्टम् । त्रसरेणुपरिमाणं तु न सजातीयम् । अतः परमाणौ द्वित्वसंख्या द्व्यणुकपरिमाणस्य, द्व्यणुके त्रित्वसंख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः ॥ ११० ॥ १११ ॥

तत्र संख्याजन्यमुदाहरति-द्व्यणुकादाविति । आदिना त्र्यणुकस्य संग्रहः । द्व्यणुकत्रसरेण्वोश्च परिमाणं नावयवगतपरिमाणजन्यं, तथासति तत्परिमाणापेक्षयोत्कृष्टत्वं स्यात्—कपालादिपरिमाणापेक्षया तदारब्धघटपरिमाणस्योत्कर्षदर्शनात् अतो द्व्यणुकपरिमाणं परमाणुगतद्वित्वसंख्यामात्रजन्यं त्रसरेणुपरिमाणं तु द्व्यणुकगतत्रित्वसंख्यामात्रजन्यमिति संक्षेपः ॥ ११० ॥ १११ ॥

परिमाणजन्यं परिमाणमुदाहरति—

परिमाणं घटादौ तु परिमाणजमुच्यते ।

परिमाणं घटादाविति । घटादिपरिमाणं कपालादिपरिमाणजन्यम् ॥

परिमाणजन्यमुदाहरति–परिमाणं घटादाविति । घटादिपरिमाणं कपालादिपरिमाणजन्यमित्यर्थः ॥

प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति—

**प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥**
**परिमाणं तूलकादौ**

प्रचय इति ॥

प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति—प्रचय इति । शिथिलाख्यः—भूयोवयवावच्छेदेनावयवान्तरासंयोगिन्यवयवे वर्त्तमानः । तेन–प्रचयेन ॥

परिमाणं चाश्रयनाशादेव नश्यतीत्याह—

**नाशस्त्वाश्रयनाशतः ।**

नाश इति । अर्थात्परिमाणस्यैव । न चावयविनाशः कथं परिमाणनाशकः ? सत्यप्यवयविनि त्रिचतुरादिपरमाणुविश्लेषे तदुपचये वावयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम्, परमाणुविश्लेषे हि द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे च त्रसरेणुनाशः । एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात्, सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापलपितुमशक्यत्वात्, शरीरादाववयवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः । न च पटाद्यविनाशेऽपि तन्त्वन्तरसंयोगात्परिमाणाधिक्यं न स्यादिति वाच्यम्, तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशात्पटनाशस्यावश्यकत्वात् । किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात्, तन्त्वन्तररूपकारणाभावात्, तन्त्वन्तरस्यावयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत्, तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्वपटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम् । अवयविनः प्रत्यभिज्ञानं तु साजात्येन दीपकलिकादिवत् । न च पूर्वतन्तव एव तन्त्वन्तरसहकारात्पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम्, मूर्तयोः

समानदेशताविरोधात्तत्र पटद्वयासम्भवादेकदा नानाद्रव्यस्य तत्रोपलम्भस्य बाधितत्वाच्च । तस्मात्पूर्वस्य द्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यस्यावश्यमभ्युपेयत्वात् ॥

नाश इति । अर्थात्परिमाणस्य । आश्रयनाशतः–समवायिनाशतः, समवायिनाशादेव परिमाणनाशो न रूपादेरिव पाकादिनापीति भावः ।

पृथक्त्वं निरूपयति—

संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ ११३ ॥

संख्यावदिति । पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वम् । तन्नित्यतादिकं संख्यावत् । तथाहि—नित्येष्वेकत्वं नित्यम्, अनित्यमेकत्वं तु आश्रयाद्वितीयक्षणे चोत्पद्यते(१) आश्रयनाशान्नश्यति, तथैकपृथक्त्वमपि, द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः ॥ ११२ ॥ ११३ ॥

पृथक्त्वं लक्षयति–संख्यावत्त्विति । इदमस्मात्पृथगिति पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वम्, लक्ष्यतावच्छेदकं प्रत्यक्षसिद्धा पृथक्त्वजातिः । नित्यतादिकं संख्यावत्–नित्येष्वेकत्वं नित्यं अनित्ये अनित्यमेकत्वं आश्रयद्वितीयक्षणे उत्पद्यते आश्रयनाशान्नश्यति, तथा एकपृथक्त्वमपि द्वित्वादिवद्द्विपृथक्त्वादिकमपीत्यर्थः ॥ ११२ ॥ ११३ ॥

अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते ।
अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥ ११४ ॥

नन्वयमस्मात्पृथगित्यादावन्योन्याभावो भासते तत्कथं पृथक्त्वं गुणान्तरं स्वीक्रियते ? न चास्तु पृथक्त्वं न त्वन्योन्याभाव इति वाच्यम्, रूपं न घट इति प्रतीत्यनापत्तेः । नहि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति, न वा घटे घटावधिकं पृथक्त्वमस्ति, येन परम्परासम्बन्धः कल्प्यत इत्यत आह—अस्मादिति । ननु शब्दवैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेत् । न —विनार्थभेदं घटात्पृथगितिवद्घटो न पट इत्यत्रापि पञ्चमीप्रसङ्गात् । तस्माद्यदर्थयोगे पञ्चमी

(१) अत्र द्वितीयक्षणे चोत्पद्यते इत्यनन्तरं स्वाश्रयावयवगतैकत्वासमवायिकारणकं चेति पूरणीयम् ।

सोऽर्थो नञर्थान्योन्याभावतो भिन्नो गुणान्तरं कल्प्यत इति ॥ ११४ ॥

नन्वयमस्मात्पृथगितिप्रत्ययस्यान्योन्याभावेनैवोपपत्तेः कथं पृथक्त्वं गुणान्तरं तत्राह—अन्योन्येति । अस्य-पृथगितिप्रत्ययस्य ॥

युक्तिमाह-अस्मादिति । पृथक्त्वस्य सावधित्वात्पटात्पृथक् घट इति प्रतीतिर्जायते, अन्योन्याभावस्य सावधित्वाभावात् घटात्पटो नेति प्रतीतिर्न जायते किन्तु घटः पटो नेत्येव, अतस्तयोर्विलक्षणत्वान्नान्योन्याभावेन गतार्थतेति भावः ॥ ११४ ॥

संयोगं निरूपयति—

अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥

अप्राप्तयोरिति । तं विभजते—कीर्तित इति । एषः—संयोगः ॥ ११५ ॥

संयुक्तव्यवहारहेतुं संयोगं निरूपयति-अप्राप्तयोरिति । प्राप्तिः—सम्बन्धः, स च समवायोऽपीत्यत उक्तमप्राप्तयोरिति । असम्बद्धयोरित्यर्थः । आधार्याधारभावानापन्नयोरिति यावत् । स्वरूपकथनमिदम्, लक्षणन्तु संयोग इत्यनुगतमतिसिद्धा संयोगत्वजातिः ॥

तं विभजते-कीर्तित इति । एकः संयोगः अन्यतरकर्मजः—द्वयोर्मध्ये एकक्रियाजन्यः ॥ ११५ ॥

तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः ।
आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥ ११६ ॥
मेषयोः संनिपातो यः स द्वितीय उदाहृतः ।

संनिपातः-संयोगः । द्वितीयः—उभयकर्मजः ॥

उभयस्पन्दजन्यः—उभयक्रियाजन्यः । संयोगजः—अवयवानवयवसंयोगादवयव्यनवयविसंयोगः ।

क्रमेण तानुदाहरति—आदिम इत्यादिना ॥ ११६ ॥

(१)कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥ ११७ ॥
तृतीयः स्यात्कर्मजोऽपि द्विधैव परिकीर्तितः ।
अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥

---

(१) अत्र कपालतन्तुसंयोगात्संयोगस्तन्तुकुम्भयोरिति चन्द्रिकाभिमतः पाठः ।

शब्दाहेतुर्द्वितीयः स्याद्

तृतीय इति । संयोगजसंयोग इत्यर्थः । तृतीयः स्यादिति पूर्वेणान्वितम् । आदिमः—अभिघातः। द्वितीयो नोदनाख्यः संयोग इति॥

तृतीयमाह—कपालेति । तृतीयः स्यादिति पूर्वेणान्वितम् । ननु संयोगजसंयोगे मानाभावः? यत्र कपालक्रियया तन्तुसंयोगस्ततः कुम्भतन्तुसंयोगस्तत्कपालक्रियाया एव कुम्भतन्तुसंयोगं प्रति कारणत्वं न तु कपालतन्तुसंयोगस्येति चेत्, न—समवायेन संयोगं प्रति समवायेन क्रियायाः कारणत्वात्कुम्भे समवायेन क्रियाया अभावेन कुम्भे तन्तुसंयोगानुपपत्तेः क्रियायाः सामानाधिकरण्यसम्बन्धेन हेतुत्वान्तरकल्पनापेक्षया समवायेन संयोगस्यैव हेतुत्वकल्पनौचित्यात् । न च कपालसंयोगस्य तन्ताविव समवायेन कपालेऽपि सत्त्वेन कुम्भप्रतियोगिकसंयोगापत्तिरिति वाच्यम्, कपालप्रतियोगिकत्वविशिष्टकपालसंयोगस्य कारणत्वाङ्गीकारात् स्वस्मिन् स्वप्रतियोगिकसंयोगानभ्युपगमादित्यास्तां विस्तरः ॥ ११७ ॥

कर्मजं विभजते—कर्मजोऽपीति ॥

आदिमः—अभिघाताख्यः ॥ ११८ ॥

द्वितीयः—नोदनाख्यः ।

विभक्तप्रत्ययासाधारणं कारणं विभागं निरूपयति—

विभागोऽपि त्रिधा भवेत् ।

एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥ ११९ ॥

विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत् ।

हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥

विभाग इति ।

एककर्मेति । तदुदाहरणं तु श्येनशैलविभागादिकं पूर्ववद्बोध्यम् । तृतीयोऽपि—विभागजविभागः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति द्विविधः । आद्यस्तावत्—यत्र कपाले कर्म ततः कपालद्वयविभागः, ततो घटारम्भकसंयोगनाशः, ततो घटनाशः,

ततस्तेनैव(१) कपालविभागेन सकर्मणः कपालस्याकाशविभागो जन्यते, तत आकाशसंयोगनाशः, तत उत्तरदेशसंयोगः, ततः कर्मनाश इति । न च तेन कर्मणैव(२) कथं देशान्तरविभागो न जन्यत इति वाच्यम्, एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात्। अन्यथा (३)विकसत्कमलकुड्मलभङ्गप्रसङ्गात्, तस्माद् यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत्तदारम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत् । न च कारणविभागेनैव द्रव्यनाशात्पूर्वं कुतो देशान्तरविभागो न जन्यत इति वाच्यम्, आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात्। द्वितीयस्तावत्–यत्र हस्तक्रियया हस्ततरुविभागस्ततः शरीरेऽपि विभक्तप्रत्ययो भवति, तत्र शरीरतरुविभागे हस्तक्रिया न कारणं–व्यधिकरणत्वात् । शरीरे तु क्रिया नास्त्येव–अवयविकर्मणो यावदवयवकर्मनियतत्वात् । अतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागो जन्यत इति । अत एव विभागो गुणान्तरम्, अन्यथा शरीरे विभक्तप्रत्ययो न स्यात् । अतः संयोगनाशेन विभागो नान्यथासिद्धो भवति ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥

विभक्तप्रत्ययहेतुं विभागं विभजते–विभागोपीति ॥

स्पष्टयति–एकेत्यादि । तत्रैककर्मोद्भवो यथा–शैलस्थश्येनक्रियया शैलश्येनयोर्विभागः । द्वयकर्मोद्भवो यथा–मेषयो स्पष्टः ॥ ११९ ॥

विभागजं विभजते–तृतीयोपीति ॥१२०॥

द्वैविध्यं स्पष्टयति–हेतुमात्रेति । कारणमात्रविभागादेकः, कारणाकारणविभागादपरः । तत्राद्यो यथा–कपालद्वयविभागात्कपालाकाशविभागः । द्वितीयो यथा हस्ततरुविभागात्कायतरुविभागः ।

---

(१) एवकारेण कर्मणो व्युदासः । (२) कपालद्वयविभागजनककर्मणेत्यर्थः ।

(३) विकसदिति । तत्राग्रावच्छेदेनानारंभकसंयोगप्रतिद्वन्द्विविभागजनककर्मणः सत्त्वात्तेन कर्मणा मूलावच्छिन्नारंभकसंयोगविरोधिविभागोत्पत्तिस्तेन चारंभकसंयोगनाशस्तेन कमलनाशः स्यादिति भावः ।

अत्र सर्वत्र लक्षणं विभागत्वं जातिर्विभाग इति प्रत्यक्षसिद्धा ॥ १२० ॥

परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति—

परत्वं चापरत्वं च द्विविधं परिकीर्तितम् ।
दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ॥ १२१ ॥

परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत् ।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ १२२ ॥

परत्वमपरत्वं चेति । दैशिकमिति । दैशिकपरत्वं बहुतरमूर्तसंयोगान्तरितत्वज्ञानादुत्पद्यते, एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते । अत्रावधित्वार्थे पञ्चम्यपेक्षा, यथा पाटलिपुत्रात्काशीमपेक्ष्य प्रयागः परः पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति ॥ १२१ ॥ १२२ ॥

परापरव्यवहारासाधारणकारणे परत्वापरत्वे निरूपयति—परत्वमपरत्वं चेति। परः पर इत्यनुगतमतिसिद्धपरत्वजातिमत्परत्वं तथाऽपर इति प्रत्यक्षसिद्धापरत्वजातिमदपरत्वं च द्विप्रकारमित्यर्थः।

द्वैविध्यमेव स्पष्टयति—दैशिकं कालिकं चेति । दिक्कृतं कालकृतं चेत्यर्थः। विभुद्रव्ये विप्रकृष्टदेशमात्रवृत्तित्वसन्निकृष्टदेशमात्रवृत्तित्वबुद्धेर्निमित्तकारणस्य दिक्संयोगस्यासमवायिकारणस्य चाभावेन दैशिकं तद्द्वयं न सम्भवति किन्त्वव्यापकेष्वेवेत्यभिप्रेत्याह—मूर्त्त एवेति ॥ १२१ ॥

दैशिकपरत्वस्य निमित्तकारणमाह—परत्वमिति । सूर्यसंयोगभूयस्त्वज्ञानतः— बहुतरसूर्यसंयोगान्तरितत्वरूपविप्रकृष्टत्वज्ञानतोऽपेक्षाबुद्धिरूपान्निमित्तकारणाद्भवति, यथा प्रयागस्थस्य प्रयागान्मथुरामपेक्ष्य कुरुक्षेत्रदेशो विप्रकृष्ट इति ज्ञानात्कुरुक्षेत्रदेशे परत्वम् ।

दैशिकापरत्वस्य निमित्तकारणमाह—अपरत्वमिति । तदल्पत्वबुद्धितः—अल्पतरसूर्यसंयोगान्तरितत्वरूपसंनिकृष्टत्वज्ञानतोऽपेक्षाबुद्धिरूपान्निमित्तकरणाद्भवति, यथा प्रयागात्कुरुक्षेत्रमपेक्ष्य मथुरा संनिकृष्टेति ज्ञानतो मथुरायामपरत्वम् ॥ १२२ ॥

तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।

तयोर्दैशिकपरत्वापरत्वयोः। असमवायी—असमवायिकारणम्। त-दाश्रये—दैशिकपरत्वापरत्वाश्रये ॥

तत्रोभयत्रासमवायिकारणं दिग्देशसंयोग एवेत्याह—तयोरिति। दैशिकपरत्वापरत्वयोः, असमवायी—असमवायिकारणं, तदाश्रये—दैशिकपरत्वापरत्वाश्रये ॥

दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥
परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः ।
अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥ १२४ ॥

दिवाकरेति। अत्र परत्वमपरत्वं च कालिकं ग्राह्यम्। यस्य सूर्यपरिस्पन्दापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठः, यस्य न्यूनः स कनिष्ठः। कालिकपरत्वापरत्वे जन्यद्रव्य एव। अत्र—कालिकपरत्वापरत्वयोः ॥ १२३ ॥ १२४ ॥

कालिकपरत्वस्य निमित्तकारणमाह—दिवाकरेति। बहुतरतपनपरिस्पन्दान्तरितजन्मवत्त्वरूपज्येष्ठत्वज्ञानतोऽपेक्षाबुद्धिरूपान्निमित्तकारणाद्भवति, यथा लक्ष्मणाद्रामः प्रचुरतरकालेन सम्बद्ध इति ज्येष्ठत्वज्ञानाद्रामे परत्वम्।

कालिकापरत्वस्य निमित्तकारणमाह—अपरत्वमिति। तदनन्तरबुद्धितः—अल्पतरतपनपरिस्पन्दान्तरितजन्मवत्त्वरूपकनिष्ठत्वज्ञानतोऽपेक्षाबुद्धिरूपान्निमित्तकारणाद्भवति, यथा रामाल्लक्ष्मणोऽल्पतरकालेन सम्बद्ध इति कनिष्ठत्वज्ञानाल्लक्ष्मणेऽपरत्वम्। एते तु जन्य एव न नित्ये। तत्र पूर्वोत्पन्नत्वरूपज्येष्ठत्वबुद्धेरनन्तरोत्पन्नत्वरूपकनिष्ठत्वबुद्धेः कालसंयोगरूपासमवायिकारणस्य च बाधादिति बोध्यम्।

अत्र—कालिकपरत्वापरत्वयोः ॥ १२३ ॥ १२४ ॥

अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः ।

तेषां—कालिकदैशिकपरत्वापरत्वानाम् ॥

अपेक्षाबुद्धिनाशेनेति। स्वनिमित्तकारणविप्रकृष्टादिबुद्धीनां नाशेनेत्यर्थः। तेषां—कालिकदैशिकपरत्वापरत्वानाम् ॥

क्रमप्राप्तां बुद्धिं निरूपयितुमाह—

बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥ १२५ ॥

अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते ।

बुद्धेरिति॥

क्रमप्राप्तां बुद्धिं निरूपयितुमाह–बुद्धेरिति । स्पष्टम् । १२५ ॥

अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥ १२६ ॥

तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।

तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥ १२७ ॥

तत्राप्रमां निरूपयति—तच्छून्य इति । तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः ॥

तत्प्रपञ्चो–ऽप्रमाप्रपञ्चः ॥ १२५ ॥ १२६ ॥ १२७ ॥

विभजते–अप्रमा चेत्यादि ॥ १२६ ॥

अप्रमां निरूपयति–तच्छून्य इति । तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः । अत्र प्रमायामतिव्याप्तिवारणाय तदभाववतीति । अभाववप्रमायामतिव्याप्तिवारणाय तत्प्रकारकमिति । इच्छायामतिव्याप्तिवारणाय ज्ञानमिति। नन्विदं संयोगीति प्रमायामतिव्याप्तिः–मूलावच्छेदेन संयोगाभाववति वृक्षे संयोगप्रकारकत्वादिति चेन्न, यदवच्छेदेन यत्सम्बन्धाभावस्तदवच्छेदेन तत्सम्बन्धज्ञानस्य विवक्षितत्वात् । संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् संयोगावच्छेदेन संयोगज्ञानस्य सत्त्वान्नातिव्याप्तिरिति संक्षेपः ।

तत्प्रपञ्चः-अप्रमाप्रपञ्चः ॥ १२७ ॥

आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।

भवेन्निश्चयरूपा या,

आद्य इति । विपर्यास इत्यर्थः । शरीरादौ निश्चयरूपं यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकम् , एवं शङ्खादौ पीतः शङ्ख इत्याकारकं यज्ज्ञानं निश्चयरूपं तद्भ्रम इति ॥

आद्य इति । विपर्यास इत्यर्थः । शरीरादौ गौरोऽहमित्याकारकं

यदात्मज्ञानं निश्चयरूपं तद्भ्रमः-शास्त्रानुमानादिभ्यो द्रष्टुरात्मनो देहस्य-गौरादिभ्यो भेदात्। एवं शङ्खादौ पीतः शङ्ख इत्याकारं ज्ञानमपि भ्रमः-लोकशास्त्रादिभ्यः शङ्खस्यापीतत्वात् ॥

संशयोऽथ प्रदर्श्यते ॥ १२८ ॥

किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२९ ॥

किंस्विदिति । किंस्विदिति वितर्के ।

निश्चयस्य लक्षणमाह—तदभावेति । तदभावाप्रकारकं तत्प्रकारकं ज्ञानं निश्चयः ॥ १२८ ॥ १२९ ॥

संशयस्वरूपमाह-किंस्विदिति ।

निश्चयलक्षणमाह-तदभावेति। तदभावाप्रकारकं तत्प्रकारकं ज्ञानं निश्चय इत्यर्थः। संशयेऽतिव्याप्तिवारणाय तदभावाप्रकारकमिति। तावन्मात्रे कथिते पटज्ञानस्यापि घटनिश्चयत्वापत्तेस्तत्प्रकारकमिति ॥ १२८ ॥ १२९ ॥

संशयं लक्षयति—

स संशयो मतिर्या स्यादेकत्राभावभावयोः ।
साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥

स संशय इति । एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं. संशय इत्यर्थः ।

संशयं लक्षयति-संशय इति। एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय इत्यर्थः। अत्र ह्रदपर्वतौ वह्नितदभाववन्ताविति ज्ञानेऽतिव्याप्तिवारणायैकधर्मिकेति। एकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नेत्यर्थः, तेन पर्वतो वह्निमान् द्रव्यं वह्न्यभाववदितिज्ञानव्युदासः। वृक्षः संयोगवान् तदभाववांश्चेति समुच्चयवारणाय विरुद्धेति। विरुद्धावगाहित्वं तदर्थः । घटो द्रव्यं पृथिवी चेति ज्ञानवारणाय भावाभावेति। इच्छाव्युदासार्थं विशेष्यभागः।

साधारणेति। उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणम्। यथोच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वायं स्थाणुर्न वेति सन्दिग्धे । ए-

धमसाधारणधर्मज्ञानमपि कारणम् । यथा शब्दत्वस्य नित्यानित्यव्यावृत्तत्वेन शब्दे गृहीतत्वाच्छब्दो नित्यो न वेति सन्दिग्धे । (१)विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणं—शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वभावात् । किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते, संशयस्तु मानस एवेति । एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इति । एवं व्याप्यसंशयादपि व्यापकसंशय (२)इत्यादिकं बोध्यम् । किन्तु (३)संशये धर्मिज्ञानं धर्मीन्द्रियसंनिकर्षो वा कारणमिति ॥ १३० ॥

संशयकारणमाह—साधारणादीति । कोटिद्वयसाधारणोच्चैस्तरत्वादीत्यर्थः। आदिनाऽत्रासाधारणधर्मस्य परिग्रहस्तज्ज्ञानादपि संशयदर्शनात् . यथा नित्यानित्यव्यावृत्ततयाऽवगतशब्दत्वज्ञानाच्छब्दे नित्यानित्यत्वसंशयः । आदिशब्दो भिन्नक्रमोपि बोध्यः । साधारणधर्मज्ञानादिकं संशयकारणमित्यर्थः, तेन धर्मिज्ञानधर्मीन्द्रियसंनिकर्षविशेषादर्शनविप्रतिपत्तिवाक्यादेरपि लाभः । क्वचिद्विप्रतिपत्तिवाक्यादपि कोटिद्वयोपस्थित्या संशयदर्शनात् ॥ १३० ॥

**दोषोऽप्रमाया जनकः, प्रमायास्तु गुणो भवेत् ।**

दोष इति । अप्रमां प्रति दोषः कारणम् , प्रमां प्रति गुणः कारणम् । तत्रापि पित्तादि(४)रूपा दोषा अननुगताः, तेषां कारणत्वमन्वयव्यतिरेकाभ्यां सिद्धम् । गुणस्य प्रमाजनकत्वं तु अनुमानात्सिद्धम् । यथा प्रमा ज्ञानसाधारणकारणभिन्नकारणजन्या (५)जन्यज्ञानत्वात् अप्रमावत् । न च दोषाभाव एव कारणमस्त्विति वाच्यम्,

(१) ननु साधारण्यासाधारणधर्मज्ञानजन्यसंशयवद्विप्रतिपत्तिजन्यस्तृतीयोपि संशयः स्यात्—समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरित्यादिगौतमसूत्रप्रतिपादितत्वादत आह विप्रतिपत्तिस्त्विति ।

(२) इत्यादिकमिति . आदिना साधनाव्यापकत्वसन्देहादितः साध्यव्यापकत्वसन्देहो बोध्यः ।

(३) ननु साधारणधर्मज्ञानादेरिव धर्मिज्ञानस्यापि संशयहेतुत्वात्तत्कृतः संशयविभागः कथं न प्रदर्शित इत्यत आह—संशये इति । संशये— संशयमात्रे । तथाच. धर्मिज्ञानजन्यतावच्छेदकस्य संशयत्वसमव्याप्तत्वान्न तद् विभाजकतावच्छेदकमित्यर्थः ।

(४) आदिपदेन मण्डूकवसाञ्जनापरिग्रहः । (५) भगवज्ज्ञाने व्यभिचारवारणाय जन्येति ।

पीतः शङ्ख इति ज्ञानस्थले पित्तदोषसत्त्वाच्छङ्खत्वप्रमाणुत्पत्तिप्रसङ्गात्, विनिगमनाविरहादनन्तदोषाभावकारणत्वमपेक्ष्य गुणस्य कारणताया न्याय्यत्वात् । न च गुणसत्त्वेऽपि पित्तेन प्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानम्, अतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यम्, तथाच किं गुणस्य हेतुत्वकल्पनयेति वाच्यम्। तथाप्यन्वयव्यतिरेकाभ्यां (१)गुणस्यापि हेतुत्वसिद्धेः । (२)एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वात् ।

प्रामाण्याप्रामाण्ययोः परतस्त्वं व्यवस्थापयिष्यन् भ्रमप्रमयोर्गुणागुणजन्यत्वं स्पष्टयति–दोष इति । अप्रमां प्रति दोषः कारणं, प्रमां प्रति गुणः कारणमित्यर्थः ॥

पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ १३१ ॥

तत्र दोषाः के ? इत्याकाङ्क्षायामाह–पित्तेति । क्वचित्पीतादिभ्रमे पित्तं दोषः, क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः, क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवंरूपा दोषा अननुगता एव भ्रान्तिजनका इत्यर्थः ॥ १३१ ॥

दोषानाह–पित्तदूरत्वादीति। आदिना मण्डूकवसाञ्जनादेः परिग्रहः । नानाविधः–अननुगतः, 'क्वचित्कश्चिद्दोष' इति न्यायात् तेषां कारणत्वमन्वयव्यतिरेकादेवेति सिद्धम् । तत्र पीतादिभ्रमे पित्तादिदोषः ॥ १३१ ॥

अथ के गुणा ? इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमशो गुणान्दर्शयति—

प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
संनिकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥ १३२ ॥
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥

---

(१) तथाच पित्तादिदोषाभावसत्त्वेऽपि विशेषणवद्विशेष्यसंनिकर्षरूपगुणाभावाच्छङ्खादौ न पीतत्वादिप्रमा इति दोषाभावेन न गुणस्यान्यथासिद्धित्वमिति भावः ।

(२) एवं-एवं सति, अन्वयव्यतिरेकसत्त्वेऽपि यद्यन्यथासिद्धत्वं तदेत्यर्थः

शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा ।
गुणः स्यात्, भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥

प्रत्यक्षे त्विति । प्रत्यक्षे विशेषणवद्विशेष्यसंनिकर्षो गुणः । अनुमितौ साध्यवति साध्यव्याप्यवैशिष्टयज्ञानं गुणः । एवमग्रेऽप्यूह्यम् ।

प्रमां निरूपयति—भ्रमभिन्नमिति ॥ १३२ ॥ १३३ ॥ १३४ ॥

अथ के गुणा इत्याकांक्षायां प्रत्यक्षादौ क्रमशो गुणान् दर्शयति प्रत्यक्षे त्विति । प्रत्यक्षप्रमायां विशेषणविशिष्टेन विशेष्येण सहेन्द्रियसंनिकर्षो गुण इत्यर्थः ॥

अनुमिताविति । प्रमानुमितौ साध्यवति पक्षे साध्यव्याप्यवत्ताज्ञानं गुणः ॥

शक्य इति । उपमितौ शक्ये सादृश्यज्ञानं गुणः, शाब्दबोधे योग्यतायास्तात्पर्यस्य वा प्रमैव गुण इत्यर्थः ॥

प्रमां निरूपयति—भ्रमभिन्नमिति । इदं लक्षणं निर्विकल्पकसाधारणं निर्विकल्पकस्य भ्रमभिन्नत्वात् ॥ १३२ ॥ १३३ ॥ १३४ ॥

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं, तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावादत आह—

अथ वा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।
तत्प्रमा, न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥१३५।
प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ।

अथवेति । तद्वद्विशेष्यकं तत्प्रकारकं ज्ञानं प्रमेत्यर्थः । अथैवं स्मृतेरपि प्रमात्वं स्यात्, ततः किमिति चेत्, तथासति तत्करणस्यापि प्रमाणान्तरत्वं स्यादिति चेत् । न—यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षितत्वात् । इदं तु बोध्यम् । येन सम्बन्धेन यद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकत्वं तेन सम्बन्धेन तत्प्रकारकत्वं च वाच्यम्, तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः ।

एवं सति निर्विकल्पकं प्रमा न स्यात् तस्य सप्रकार-

कत्वाभावादत आह–न प्रमेति । ननु वृक्षे कपिसंयोगज्ञानं भ्रमः प्रमा च स्यादिति चेत् । न–प्रतियोगिव्यधिकरणसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात् । न च वृक्षे कपिसंयोगाभावावच्छेदेन संयोगज्ञानं भ्रमो न स्यात्तत्र संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वादिति वाच्यम्, तत्र संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् । लक्ष्यस्याननुगमाल्लक्षणाननुगमेऽपि न क्षतिः ॥

ननु यत्र 'शुक्तिरजतयोरिमे रजते' इति ज्ञानं तत्र रजतांशेपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावात् अत आह–अथवेति । तत्सम्बन्धावच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतन्निष्ठप्रकारताशालिज्ञानस्य तत्त्वं तत्सम्बन्धावच्छिन्नतत्प्रकारकप्रमात्वमिति यावत् । तत्सम्बन्धावच्छिन्नतद्वत्त्वानिवेशात्तेन सम्बन्धेन तद्विरहिण्यपि कालिकादिसम्बन्धेन तद्वत्त्वस्य सत्त्वेऽपि न भ्रमेऽतिव्याप्तिः । एवं रजत एव संयोगादिसम्बन्धेन रजतत्वप्रकारकज्ञानस्यापि समवायिसंसर्गकप्रमात्वापत्तिवारणायोभयत्र तत्सम्बन्धावच्छिन्नत्वनिवेशः । तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानं प्रमेत्यर्थः । तत्प्रकारकभ्रमेऽतिव्याप्तिवारणाय तद्वद्विशेष्यकेति । रजत एव द्रव्यमिति ज्ञाने रजतत्वप्रमात्वापत्तिवारणाय तत्प्रकारकेति । रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानवारणाय विशेष्यकत्वावच्छिन्नेति । ज्ञानपदं च तथाविधेच्छायामतिव्याप्तिवारणायेति संक्षेपः ॥

एवं सति निर्विकल्पकं प्रमा न स्यात्–तस्य सप्रकारकत्वाभावादत आह न प्रमेति । प्रमात्वभ्रमत्वघटकप्रकारकत्वस्य तत्राभावादिति भावः ॥ १३५ ॥

प्रकारकत्वघटितप्रमात्वस्य तत्र बाधेऽप्यगृहीतार्थग्राहित्वरूपं प्रमात्वमस्त्येवेत्यभिप्रेत्य प्रमाप्रस्तावे तल्लक्षणमाह–प्रकारतादिशून्यं हीति । आदिना विशेष्यतापरिग्रहः, तथाच प्रकारतासामान्यशून्यत्वं विशेष्यतासामान्यशून्यत्वं च तत्त्वमित्यर्थः । निष्प्रकारकं निर्विशेष्यकं च ज्ञानं निर्विकल्पकमिति यावत् । लक्षणान्तरमाह सम्बधानवगाहीति । सम्बन्धविषयताशून्यज्ञानत्वं तत्त्वमित्यर्थः । ननु चक्षुःसंयोगचक्षुःसंयुक्तसमवायरूपकारणबलात् घटघटत्वयोर्भानवत् चक्षुःसम्बद्ध-

विशेषणतारूपकारणबलात्तत्सम्बन्धस्यापि भाने बाधकाभावः, प्रतिबध्यप्रतिबन्धकभावकल्पने च गौरवात्, तथाचेदं लक्षणमसम्भवग्रस्तमिति चेत्। न—सम्बन्धानवगाहीत्यस्य संसर्गमर्यादया सम्बन्धानवगाहीत्यर्थे तात्पर्यात् सम्बन्धनिष्ठसांसर्गिकविषयताशून्यज्ञानत्वं तत्त्वमिति यावत्। इत्थं च विशिष्टबुद्धेरपि लक्षणद्वयं बोध्यम्—तत्प्रकारकबुद्धित्वं तत्सम्बन्धावगाहिबुद्धित्वं चेति। प्रकारता विशेष्यता च विषयताविशेष इत्यास्तां विस्तरः।

प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥

प्रमात्वमिति। मीमांसका हि प्रमात्वं स्वतो ग्राह्यमिति वदन्ति। तत्र गुरूणां मते ज्ञानस्य (१)स्वप्रकाशरूपत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यते (इति)। भाट्टानां मते ज्ञानमतीन्द्रियम्, ज्ञानजन्या ज्ञातता प्रत्यक्षा, तया च ज्ञानमनुमीयते। मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते। सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते। (२)विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषयः(३)। तन्मतं दूषयति-न स्वतो ग्राह्यमिति। संशयेति। यदि ज्ञानस्य प्रामाण्यं स्वतो ग्राह्यं स्यात्, तदाऽनभ्यासदशापन्न(४)ज्ञाने प्रामाण्यसंशयो न स्यात्। तत्र हि यदि ज्ञानं ज्ञातं, तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं संशयः? यदि तु ज्ञानं न ज्ञातं, तदा धर्मिज्ञानाभावात्कथं संशयः। तस्माज्ज्ञाने प्रामाण्यमनुमेयम्। तथाहि-इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं, यथाऽप्रमा। इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात्, एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात्।

---

(१) स्वविषयकत्वादित्यर्थः।

(२) ननु ज्ञानस्य तस्य विषयाविषयकत्वात् कथं विषयघटितप्रामाण्यं तस्य विषय इत्यतो ज्ञानज्ञानस्य विषयविषयकत्वे प्रमाणमाह विषयनिरूप्यमिति। विषयाविषयकप्रत्यक्षाविषय इत्यर्थः।

(३) विषयाविषयकतानियतस्वाविषयताकप्रत्यक्षकं ज्ञानमित्यर्थः।

(४) अवधृतप्रामाण्यसजातीयेतरेत्यादिः। यस्मिन्प्रामाण्यमवधृतं तत्सजातीये तत्साजात्येन लिङ्गेन प्रामाण्यानुमानान्न संशय इति भावः।

न च हेतुज्ञानं कथं जातमिति वाच्यम्, पृथिवीत्वप्रकारकत्वस्य स्वतो ग्राह्यत्वात्, तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात्, (१)तत्प्रकारकत्वावच्छिन्नतद्विशेष्यकत्वं परं न गृह्यते, संशयानुरोधात्। (२)ननु — सर्वेषां ज्ञानानां यथार्थत्वात्प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थम्। न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात्—तव मते भ्रमस्याभावादिति वाच्यम्, तत्र हि दोषाधीनस्य पुरोवर्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात्। सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात्तदेव कारणम्, अस्तु वा तत्रापि भेदाग्रहः, स एव कारणमिति। न चान्यथाख्यातिः सम्भवति, रजतप्रत्यक्षकारणस्य रजतसंनिकर्षस्याभावाद्रङ्गे रजतबुद्धेरनुपपत्तेः—इति चेत्। न। सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वादन्यत्रापि तत्कल्पनात्। न च संवादिप्रवृत्तौ तत्कारणं, विसंवादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यम्, लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात्। (३)इत्थं च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः, फलमुखगौरवस्यादोषत्वात्। (४)किञ्च (यत्र) रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं जातं तत्र न कारणबाधोऽपि। (५)अपि

(१) ननु कथं तर्हि प्रामाण्यस्यानुमेयता गन्धवति पृथिवीत्वप्रकारकत्वस्येव पृथिवीत्ववति पृथिवीत्वप्रकारकत्वादेरपि प्रत्यक्षसंभवादत आह तत्प्रकारत्वेति। (२) गुरुः शंकते नन्विति।

(३) रजतांशेपि संनिकर्षाभावादन्यथाख्यातिर्न संभवतीत्यभिप्रायेण प्राभाकरदूषणमुद्धरति—इत्थं चेति।

(४) ननु रजतत्वविशिष्टविषयकत्वेन प्रवृत्त्यनुमितौ प्रति रजतभेदाग्रहत्वेन हेतुत्वमस्तु लाघवात्, नतु प्रवृत्तिं प्रति विशिष्टज्ञानत्वेन पृथक्कारणत्वं गौरवात्। एवं च न तदनुरोधेन कल्पनीयभ्रमात्मकरजतज्ञानार्थं ज्ञानलक्षणाप्रत्यासत्त्यादर इति कारणबाधाद्बाधितमेव मिथ्या ज्ञानमिति शङ्कां मनसि निधाय स्थलविशेषे कारणबाधाभावादनिवार्यमेव मिथ्याज्ञानमित्याह—किंचेति।

(५) ननु तत्तद्विशेष्यकतत्तद्विशिष्टबुद्धिम्प्रति तत्तद्विशेषणे तत्तद्विशेष्यघटितसंनिकर्षो हेतुः अन्यथातिप्रसंगात्, तथा च कथं रजतघटितसंयुक्तसमवायेन रंगे रजतत्वग्रह इत्यत आहापि चेति। अन्यथाख्यातिभयादित्यनंतरं रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्रहस्येति पूरितस्य सत्त्वादित्य-

च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्याताम् रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात्, त्वन्मते (१)दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात्। (२)किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा। यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम्। (सेयमुभयतःपाशा रज्जुः)। इत्थं चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणं, रङ्गं रजततयाऽवेदिषमित्यनुभवादिति सङ्क्षेपः ॥ १३५ ॥ १३६ ॥

प्रमात्वमिति। मीमांसका हि तद्वद्विशेष्यकत्वावच्छिन्नं तत्प्रकारकत्वरूपं प्रमात्वं स्वतो ग्राह्यमिति वदन्ति। स्वतोग्राह्यत्वं च ज्ञानग्रहत्वव्यापकविषयितानिरूपकत्वम्। मुरारिमते घटमहं जानामीत्यनुव्यवसायेनैव ज्ञानग्रहे तद्विशेष्यकत्वे सति तत्प्रकारकत्वरूपप्रामाण्यस्यापि ग्रहात्। प्राभाकरमते स्वप्रकाशवादाभ्युपगमात्सर्वस्यापि ज्ञानस्य घटत्वेन घटं जानामीत्याद्यनुव्यवसायरूपत्वात् यद्विषया यद्वृत्तिर्यत्प्रकारिका ज्ञानता सा तद्विशेष्यकतत्प्रकारकज्ञानजन्या यथा पटे पटत्वप्रकारिका ज्ञानतेत्यनुमानेनैव ज्ञानग्राहकेण प्रामाण्यस्यापि ग्रहादिति। तदेतद्दूषयति—न स्वतोग्राह्यमिति। कुतः? संशयानुपपत्तितः। यदि ज्ञानप्रामाण्यं स्वतो ग्राह्यं स्यात् तदाऽनभ्यासदशापन्नज्ञाने प्रामाण्यसंशयो न स्यात्। परमते ज्ञानग्राहकप्रथमानुव्यवसायादिभिरेवं प्रामाण्यस्य निश्चयात्, तथाच तादृशनियमस्याप्रामाणिकत्वेन स्वतोग्राह्यत्वपक्षस्य बाधात्संवादिप्रवृत्तिजनकत्वाद्यनुमानेनैव तद्ग्राह्यमिति परतस्त्वमेव प्रामाण्यस्येति भावः ॥ १३६ ॥

---

नेनान्वयः। अनेन रङ्गेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री रजते इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री च दर्शिता। रङ्गे रजतभेदाग्रहस्येत्यादिना च रङ्गे इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री रजतेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री च दर्शिता।

(१) दोषादेवेति। त्वन्मते न्यायाभिमतभ्रमस्थलाभिषिक्तं भेदाग्रहं प्रति दोषस्य हेतुत्वादिति भावः।

(२) ननु रङ्गे रजतभेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रङ्गे निवृत्तिरेवं रजते रङ्गभेदासंसर्गग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रजते प्रवृत्तिरिति कथं युगपत्प्रवृत्तिनिवृत्त्योरापादनमित्यत आह—किञ्चेति।

पूर्वं व्याप्तिरुक्ता, तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति—

व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे, तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥

व्यभिचारस्येति । व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणम् । व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात्तदभावः कारणमित्यर्थः । एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता । भूयोदर्शनं तु न कारणं—व्यभिचारास्फूर्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात् । क्वचिद्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते ।

यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षे बाधकस्तर्कोऽपेक्षितः । तथाहि—वह्निविरहिण्यपि धूमः स्यादिति यद्याशङ्का भवति, तदा सा वह्निधूमयोः कार्यकारणभावस्य प्रतिसन्धानान्निवर्तते । यद्ययं वह्निमान्न स्यात्तदा धूमवान्न स्यात् कारणं विना कार्यानुत्पत्तेः । यदि च क्वचित्कारणं विनापि कार्यं भविष्यति तदाऽहेतुक एव भविष्यतीति (१)तत्राप्याशङ्का भवेत्, तदा सा व्याघातादपसारणीया । यदि हि कारणं विना कार्यं स्यात्, तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य वा नियमत उपादानं तवैव न स्यादिति । (२)यत्र स्वत एव(३) शङ्का नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तम्—तर्कः क्वचिच्छङ्कानिवर्तक इति ॥ १३७ ॥

ननु प्रामाण्यमनुमानगम्यं तदा भवेद्यद्यनुमानं प्रमाणं भवेत्तदेव न सम्भवति व्याप्तेर्ग्राहकाभावेनाज्ञानादित्यतः प्रामाण्यानुमितिप्रयोजकतया व्याप्तिग्रहोपायं दर्शयति—व्यभिचारस्येति । व्यभिचारज्ञानाभावः सहचारदर्शनं च व्याप्तिग्रहे कारणमित्यर्थः । तत्र व्यभिचार-

(१) तत्रापि—तादृशतर्ककारणीभूतकार्यकारणभावग्रहेपि, आशंका भवेत्—आशंका प्रतिबंधिका भवेदित्यर्थः ।

(२) ननु तर्कं प्रति आपाद्यव्याप्यापादकवत्ताज्ञानं कारणं, तत्र व्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिवर्तकस्तर्कोऽपेक्षितः, एवमग्रेऽपीत्यनवस्थेत्यत आह—यत्रेति ।

(३) स्वतएव—शङ्कासामग्रीविरहादेव ।

ज्ञानाभावः प्रतिबन्धकाभावविधया, साध्यसामानाधिकरण्यरूपसह-चारस्य दर्शनं स्वातन्त्र्येण तथैवान्वयव्यतिरेकतोऽवगमात्। तत्र व्यभिचारः-साध्याभाववद्वृत्तित्वं साध्यासामानाधिकरण्यं च, तस्य ज्ञानं-निश्चयः शङ्का च, तदुभयं व्याप्तिग्रहे प्रतिबन्धकम्। तत्रापि व्यापकसामानाधिकरण्यरूपव्याप्तिग्रहं प्रति साध्याभाववद्वृत्तित्वरूप-व्यभिचारज्ञानस्य मणिमन्त्रादिन्यायेनैव प्रतिबन्धकतेति विवेकः। तत्र शङ्कापगमः क्वचित्तर्कात् क्वचित्स्वतः सिद्ध एवेत्यभिप्रेत्याह–क्वचि-दिति। तर्कस्य शङ्कानिवर्त्तकत्वं तु व्याप्तिज्ञानकारणीभूतो यो व्यभिचार-शङ्काविरहस्तत्सम्पादकत्वम्। एवं च व्यभिचारशङ्काद्यप्रतिबन्धकतायां तर्कस्योत्तेजकत्वम्। उत्तेजकत्वं च–प्रतिबन्धकतावच्छेदकीभूताभाव-प्रतियोगित्वम्। यथा मन्त्राद्यभावविशिष्टो मणिर्दाहादेः प्रतिबन्धक इति प्रतिबन्धकतावच्छेदकीभूतो मन्त्राद्यभावस्तत्प्रतियोगिमन्त्रादि-रुत्तेजक इति, तथा–प्रकृतेपीति भावः। तथाचोत्तेजकाभावविशिष्ट-व्यभिचारशङ्काविरहसम्पादकत्वमक्षुण्णमेव तर्कस्येति भावः। तर्क-श्चाहार्यारोपविशेषः। तर्कत्वं च तर्कयामीत्यनुभवसिद्धो मानसत्वव्या-प्यो जातिविशेषः। स च तर्को द्विविधो–विषयपरिशोधको व्याप्ति-ग्राहकश्च। विषयपरिशोधको यथा–यदि निर्वह्निः स्यान्निर्धूमः स्यादि-त्यादिः। व्याप्तिग्राहको यथा–धूमो यदि वह्निव्यभिचारी स्याद्वह्नि-जन्यो न स्यादित्यादिः। तत्राद्यः प्रवृत्त्यादिविरोध्याहार्यशङ्कामात्र-निवर्त्तकोऽनुमितिविषयसाध्यशङ्कायां विपरीतकोटावनिष्टोपस्थानेन द्वेषद्वारा बोध्यः। द्वितीयः मणिमन्त्रादिन्यायेन द्वेषादिकं विनाप्या-हार्यानाहार्यशङ्कानिवर्त्तकस्तथैवानुभवात्। अत्र यथाऽनुमितौ पक्षे साध्यव्याप्यहेतुमत्तापरामर्शो हेतुः, तथा तर्के प्रत्यापाद्यव्याप्या-पादकवत्तत्परामर्शो हेतुः। तत्कार्यकारणभावस्त्वव्यवहितोत्तर-त्वादिनाऽनुमितिपरामर्शवदवसेयः। पक्षे आपादकवत्तानिश्चयश्चा-हार्यरूपो हेतुः। एवमनुमितौ पक्षविशेष्यकसाध्यसिद्धिरिव तर्केपि त्रयो दोषाः—इष्टापत्तिः मूलशैथिल्यं विपर्ययापर्यवसानं चेति। तत्रेष्टापत्तिरनुमितौ सिद्धिरिव तर्कं प्रति न साक्षात्प्रतिबन्धिका, किन्तु पक्षविशेष्यकापाद्याभावनिश्चयरूपो बाधनिश्चयो जनकस्त-द्विघटिका, अत एव तर्के बाधोऽनुगुण एवेति सिद्धान्तः। तथा चापाद्याभावेन वह्निजन्यत्वाभावाभावेनापादकाभावस्य वह्नि-

व्यभिचारित्वाभावस्य सिद्धिः पक्षे आपाद्यकोटिप्रतियोगिमत्तानिश्चयस्य पूर्वं सत्त्वेन नेष्टापत्तिः शङ्कास्पदं भवति । यत्र तु तादृशनिश्चयो न भवति तत्रेष्टापत्त्या तर्कविघात इति बोध्यम् । नन्ववह्नेरेव भविष्यतीत्यादिशङ्का तर्कविरोधिनी स्यात् तत्र तर्कान्तरात्तन्निवृत्तावनवस्थेति चेत्, न-बीजाङ्कुरवदिष्टत्वात्, अत एवोक्तं-तर्कः शङ्कावधिर्मत इति । मूलशैथिल्यं-तर्कमूलव्याप्तिग्राहकमानाप्रवृत्तिः, यथा वह्निधूमयोः कार्यकारणभावनिश्चयं विना निर्वह्निः स्यात् निर्धूमः स्यादिति तर्ककारणीभूतयोरन्वयव्यतिरेकव्याप्त्योर्ग्राहकस्याप्रवृत्तिः, व्याप्तिनिश्चयप्रतिबन्धद्वाराऽयं दोष इति बोध्यम् । विपर्ययापर्यवसानं-तर्कमूलव्याप्तेः संशयैककोटिमात्रग्राहकमानानुपयोगित्वम् ,यथा धूमो यदि वह्निजन्यो न स्याद्वह्निजन्यत्वतदितरजन्यत्ववान्न स्यादित्यस्येति संक्षेपः ॥ उत्सर्गा-ऽविनिगमनकल्पना-लाघव-गौरव-प्रतिबन्ध-नौचित्यानि तु न तर्काः-प्रसङ्गानात्मकत्वात्, तथाहि-बाधकैकापोद्यो नियम उत्सर्गः, सोऽयं भूयःसाहचर्यरूप एव न तर्कः । अविनिगमस्तु---युगपदुपस्थितयोः प्रमाणाभावादवधारणाभावः, अत्र च प्रमाणाभाव एव दोषो न त्वतिरिक्तः। लाघवगौरवे तु-स्वल्पपरिच्छेदकत्वं स्वल्पे सम्भवति, गुरुपरिच्छेदकत्वं च गुरौ प्रमाणानां स्वभावविशेषौ न तु तर्कौ । प्रतिबन्दिस्त्वर्थान्तरं,विरोधिपरत्वे तु तदन्तर्भूतैव। अनौचित्यं तु-औचित्यस्य प्रामाणिकत्वस्याभावप्रमाणभावान्तर्गत एवेति सङ्क्षेपः ॥ १३७ ॥

इदानीं (परकीय)व्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति—

साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥

साध्यस्येति । साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधित्वमित्यर्थः । ननु (१)स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात्-तस्य साध्यव्यापकत्वाभावाच्छ्यामत्व-

(१) काकः श्यामो मित्रातनयत्वादित्यादावित्यर्थः । तेन वक्ष्यमाणेन ध्वंसो विनाशी जन्यत्वादित्यनेन न पौनरुक्त्यम् , अस्य साधनावच्छिन्नसाध्यव्यापकत्वादग्रिमस्य साधनरूपपक्षधर्मावच्छिन्नसाध्याव्यापकत्वात् ।

स्य घटादावपि सत्त्वात्, एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वं(१) नोपाधिः स्यात्—प्रत्यक्षत्वस्यात्मादिषु सत्त्वात्तत्र च रूपाभावात्, एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्यात्—विनाशित्वस्य प्रागभावेऽपि सत्त्वात्तत्र च भावत्वाभावादिति चेत्। न-यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यात्। मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं, तदवच्छिन्नसाधनाव्यापकं च। एवं पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वम्, बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकं च। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वं बोध्यम्। सद्धेतौ तु एतादृशो धर्मो नास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किञ्चित्स्यात्। व्यभिचारिणि त्वन्तत उपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचारनिरूपकमधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरन्ततः(२) सम्भवतीति ॥ १३८ ॥

व्यभिचाराग्रहो व्याप्तिग्राहक इत्युक्तम्, व्यभिचारज्ञानं च हेतावुपाधिस्मरणात्, प्रसङ्गसङ्गत्योपाधिं निरूपयति-साध्यस्येति। साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापक इत्यर्थः। यथा धूमवान् वह्नेरित्यत्रार्द्रेन्धनसंयोगो धूमस्य व्यापको वह्नेरव्यापकः। व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम्, अव्यापकत्वं तद्वन्निष्ठात्यन्ताभावप्रतियोगित्वं, भवति आर्द्रेन्धनसंयोगो धूमवन्महानसादिनिष्ठाभावाप्रतियोगी वह्निमदयोगोलकनिष्ठाभावप्रतियोगीति लक्षणसमन्वयः॥ स उपाधिश्चतुर्विधः—केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकः उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति। तत्राद्य-आर्द्रेन्धनसंयोग उक्त एव। द्वितीयो यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमु-

(१) नन्वत्रोद्भूतपदं व्यर्थं प्रत्यक्षं प्रति उद्भूतरूपस्याव्यापकत्वे रूपस्य सुतरामव्यापकत्वादिति चेन्न, उपाधेः साध्यव्यापकत्वे कार्यकारणभावलक्षणानुकूलतर्कप्रदर्शनार्थमुद्भूतपदस्योपादानात्। (२) अन्तत इति। तादृशधर्मान्तरस्यास्फूर्ताविस्यर्थः।

द्भूतरूपवत्त्वम्। तृतीयो यथा ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वम्। चतुर्थस्तु प्रागभावो विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम्॥

एतच्चतुष्टयस्यानुगमकं निष्कर्षं प्रति जानीते-तस्य निष्कर्षोऽयमिति। तस्य-उपाधेः॥ १३८॥

(१)अत एव लक्ष्यमप्युपाधिस्वरूपमेतदनुसारेण(२) दर्शयति—

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता॥ १३९॥

सर्व इत्यादिना। स्वसाध्येति। स्वं-उपाधिः, स्वं च साध्यं च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः॥ १३९॥

सर्व इति। येषां-उपाधीनां, एकाश्रये-एकस्मिन्नधिकरणे हेतोः स्वसाध्यव्यभिचारिता-स्वं उपाधिः, स्वं च साध्यं च स्वसाध्ये तयोर्व्यभिचारिता, ते सर्वे साध्यसमानाधिकरणाः साध्याधिकरणे विद्यमानाः साध्यव्यापकाः सदुपाधयो भवन्तीत्यर्थः। एकाश्रये व्यभिचारितेत्यनेनोपाधिशून्यं व्यभिचारनिरूपकं हेत्वधिकरणं लब्धम्। एतेन साध्यत्वाभिमतमुपाध्यनधिकरणहेतुमन्निष्ठयत्किञ्चिद्धर्मावच्छिन्नं ग्राह्यमिति ज्ञापितम्। साध्यसमानाधिकरणा इत्यनेनोपाध्यधिकरणसाध्याधिकरणयोरेकत्वकथनात् साध्याधिकरणवृत्तिधर्मस्योपाधिसामानाधिकरण्यं ज्ञापितम्, तथाच स्वावच्छिन्नानधिकरणहेतुमन्निष्ठयत्किञ्चिद्धर्मावच्छिन्नसाध्यसमानाधिकरणा यावद्धर्मा यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मवत्त्वमुपाधित्वमिति यावत्। स्वं-उपाधितावच्छेदकं, भवति हि आर्द्रेन्धनत्वावच्छिन्नानधिकरणवह्निमन्निष्ठद्रव्यत्वावच्छिन्नमहानसत्वादयः धूमसमानाधिकरणा यावद्धर्मा आर्द्रेन्धनत्वावच्छिन्नसमानाधिकरणा अतस्तद्वदार्द्रेन्धनमुपाधिः। एवं रूपत्वावच्छिन्नानधिकरणप्रत्यक्षस्पर्शाश्रयत्ववन्निष्ठबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वसमानाधिकरणा यावद्धर्मा रूपत्वावच्छिन्नसमानाधिकरणा अतो रूपवत्त्वमुपाधिः एवं भावत्वानधिकरणजन्यत्ववन्नि-

---

(१) अतएव-यद्धर्मावच्छिन्नत्वघटितनिरुक्तलक्षणस्य तात्पर्यविषयत्वादेव।
(२) एतदनुसारेण-निरुक्तलक्षणानुसारेणेत्यर्थः।

ष्ठजन्यत्वावच्छिन्नविनाशित्वसमानाधिकरणा, भावत्वसमानाधिकरणा अतो भावत्वमुपाधिः। एवं चतुर्थेऽपि भावत्वानधिकरणप्रमेयत्ववन्निष्ठजन्यत्वावच्छिन्नविनाशित्वसमानाधिकरणा भावत्वसमानाधिकरणा अतो भावत्वमुपाधिरिति लक्षणसमन्वयः। सद्धेतौ तु एतादृशो धर्मो नास्ति तादृशसाध्यसमानाधिकरणो यावद्धर्मो यद्धर्मावच्छिन्नसमानाधिकरणः स्यात्। सद्धेतौ महानसत्वाभावेऽतिव्याप्तिवारणाय लक्षणे यावदिति धर्मविशेषणम्। अवच्छिन्नसाध्यकोपाधिसङ्ग्रहाय यत्किञ्चिद्धर्मावच्छिन्नेति। द्रव्यं जातेरित्यादौ गुणकर्मान्यत्वविशिष्टसत्त्वस्योपाधित्वसङ्गमनाय स्वावच्छिन्नेति। तथाच विशिष्टस्यानतिरेकेन सत्त्वाधिकरणजात्यधिकरणाप्रसिद्धावपि विशिष्टसत्त्वावच्छिन्नानधिकरणजातिमद्गुणनिष्ठगुणद्रव्यान्यतरत्वावच्छिन्नद्रव्यत्वसमानाधिकरणयावद्धर्माणां विशिष्टसत्तात्वावच्छिन्नसमानाधिकरणत्वात्तत्रापि लक्षणसमन्वय इति न कोपि दोषः। अधिकं त्वस्मत्कृतसत्तर्करत्नाकरे द्रष्टव्यम् ॥ १३९ ॥

उपाधेर्दूषकताबीजमाह—

**व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम्।**

व्यभिचारस्येति। उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः। तथाहि—यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैवोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्। यथा धूमवान्वह्नेरित्यादौ वह्निर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति, व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात्। यत्र तु किञ्चिद्धर्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण(१) साध्यव्यभिचारानुमानम्। यथा स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति। बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणाभावात्स्वव्याघातकत्वा(२)च्च नोपाधिः। बाधोन्नीतस्तूपाधि-

(१) तद्धर्मवत्युपाधिव्यभिचारणे—तद्धर्माधिकरणीभूतं यदुपाध्यभावाधिकरणं तद्वृत्तित्वेनेत्यर्थः। (२) स्वव्याघातकत्वादिति —उपाधेनात्रस्य दूरकृताव्याघातकत्वादित्यर्थः। प-

भवत्येव । यथा वह्निरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वह्नेरुष्णत्वग्रहे वह्नीतरत्वमुपाधिः । यस्य तूपाधेः साध्यव्यापकता सन्दिह्यते स सन्दिग्धोपाधिः । पक्षेतरस्तु सन्दिग्धोपाधिरपि नोद्भावनीयः कथकसम्प्रदायानुरोधादिति ।

केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलम् । तथाहि—अयोगोलकं धूमवद्वह्नेरित्यादावयोगोलकं धूमाभाववदार्द्रेन्धनाभावादिति सत्प्रतिपक्षसम्भवात् । इत्थं च साधनव्यापकोऽपि क्वचिदुपाधिः । यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यादावनुष्णाशीतस्पर्शवत्त्वम् । न चात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम्, सर्वत्रोपाधेर्दूषणान्तरसाङ्कर्यात् । अत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरित्याहुः ॥

उपाधेर्दूषकताबीजमाह–व्यभिचारस्येति । उपाधिव्यभिचारेण साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः। यथा वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनव्यभिचारित्वादिति । अवच्छिन्नसाध्यव्यापकोपाधिस्थले तु अयं अमुकसाध्यव्यभिचारी अमुकधर्मावच्छिन्नसाध्यव्यापकोपाधिव्यभिचारीत्यादिक एव प्रयोग इत्यन्यत्र विस्तरः ॥

शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।
तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥ १४१ ॥

शब्दोपमानयोरिति । वैशेषिकाणां मते प्रत्यक्षमनुमानं च प्रमाणम् । शब्दोपमानयोस्त्वनुमानविधयैव प्रामाण्यम् । तथाहि—दण्डेन गामानयेत्यादिलौकिकपदानि यजेतेत्यादिवैदिकपदानि वा (१)तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वाद् घटमानयेतिपदकदम्बवत् । यद्वा एते पदार्था मिथः संसर्गवन्तः यो-

---

क्षेतरत्वस्योपाधित्वे सर्वत्रानुमाने पक्षेतरत्वस्योपाधेः संभवादनुमानमात्रोच्छेदापत्त्या व्यभिचारानुमानाधानस्योपाधेर्दूषकत्वस्यासंभवादिति भावः ।

(१) तात्पर्यविषयो यः स्मारितपदार्थानां संसर्ग इत्यर्थः ।

ष्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत् । दृष्टान्तेऽपि दृष्टान्ता-न्तरेण साध्यसिद्धिरिति । एवं गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । असति च वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्तत्प्रवृत्तिनिमित्तकम्, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् । यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिद्ध्यति ।

तन्मतं दूषयति—तन्न सम्यगिति । व्याप्तिज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात् । न हि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्तीति । किञ्च सर्वत्र शाब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियतामिति ध्येयम् ॥ १४० ॥ १४१ ॥

व्यभिचारज्ञानसम्पादकत्वेनोपाधिरनुमान एव दोषो न शब्दादा-वपीति तार्किकाः। तन्न साधीयः-शब्दोपमानयोरनुमान एवान्तर्भावात्। तथाहि–या पदार्थसंसर्गबोधशाब्दप्रमा सा च एतानि पदानि स्वस्मारि-तार्थसंसर्गप्रमापूर्वाणि आकाङ्क्षादिमत्पदकदम्बकत्वात् गामभ्याज दण्डे-नेति मद्वाक्यवदित्यनुमानात्, तथा एते पदार्थाः मिथः संसर्गवन्तः आकाङ्क्षादिमत्पदकदम्बोपस्थापितत्वात् संमतवादित्यनुमानाच्च भवति एवमुपमितिरप्यनुमानादेव भवति,तथाहि–गवयादिपदानां शक्तिज्ञा-नमुपमितिः, सा च गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वात् गोप-दादिवदिति सामान्यतः संप्रवृत्तिनिमित्तकत्वे गृहीते प्रवृत्तिनिमित्तं स्वार्थाद्गोसादृश्यं तद्विशिष्ट एव सर्वेषां गवयादिप्रयोगादित्यनुमाना-न्तरात् पुरोवर्तिनश्च पक्षधर्मतारूपगोसादृश्यग्रहाद्भवति, तस्मात् श-ब्दोपमित्योरनुमितौ तत्करणयोः शब्दोपमानयोरनुमान एवान्तर्भावा-न्न पृथक् प्रामाण्यमिति वैशेषिकं मतं दूषयितुमुपन्यस्यति–शब्दोपमा-नयोरिति । शब्दोपमानशब्दाभ्यां कथितयोर्नानुमानाभिन्नप्रमाणत्वं क-थितरीत्या तत्फलस्यानुमानेनैव सम्भवादित्यर्थः ॥

दूषयति–तन्न सम्यगिति । कुतः ? व्याप्तिज्ञानं विनापि शाब्द-

बोधस्यानुभविकत्वादित्यर्थः। प्रसिद्धार्थककाव्यादौ शब्दश्रवणानन्तरं व्याप्तिज्ञानकल्पनसम्भवेऽप्यपूर्वार्थककाव्यादौ तत्कल्पनाऽसम्भवादिति भावः ॥ १४० ॥ १४१ ॥

त्रैविध्यमनुमानस्य केवलान्वयिभेदतः ।
द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥
अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते ।

त्रैविध्यमिति । अनुमानं हि त्रिविधं—केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्रासद्विपक्षः (१)केवलान्वयी, यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ, तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम् । असत्सपक्षः (२)केवलव्यतिरेकी, यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ, तत्र हि जलादित्रयोदशभेदस्य पूर्वमनिश्चिततया निश्चितसाध्यवतः सपक्षस्याभावात् । (३)सत्सपक्षविपक्षोऽन्वयव्यतिरेकी, यथा वह्निमान्धूमादित्यादौ, तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति ॥

व्याप्तिस्मरणाद्व्याप्तिव्यवस्थामाह—द्वैविध्यमिति। यत्र धूमस्तत्राग्निरित्यन्वयेन यत्राग्निर्नास्ति तत्र धूमो नास्तीति व्यतिरेकेण च व्याप्तेर्विद्यमानत्वात् द्विप्रकारत्वमित्यर्थः ॥ १४२ ॥

अन्वयेति । हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिर्व्यापकसामानाधिकरण्यादिरूपा साऽऽत्मग्रन्थे कथितेत्यर्थः। व्यतिरेकादिति । साध्याभावहेत्वभावयोर्व्यतिरेकव्याप्तिरिति शेषः ॥

तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति—

साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥

---

(१) अत्यन्ताभावाप्रतियोगिसाध्यक इत्यर्थः । यथाश्रुते सिद्धसिद्धिव्याघातात् । अत्यन्ताभावाप्रतियोगित्वस्य च प्रमेयत्वादौ सत्त्वात् लक्षणसमन्वयः ।

(२) सिद्धसिद्धिव्याघातादत्राप्यगृहीतहेतुसहचारं यद्व्यतिरेकि साध्यं तत्कत्वमित्यर्थः । साध्ये व्यतिरेकित्वं चात्यन्ताभावप्रतियोगित्वं बोध्यम् । (३) सत्सपक्षेति । गृहीतान्वयव्यतिरेकसाध्यकमित्यर्थः ।

साध्याभावेति । साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । अत्रेदं बोध्यम् । (१)यत्सम्बन्धेन यदवच्छिन्नं प्रति येन सम्बन्धेन येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभाववत्ताज्ञानात्तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति । इत्थं च यत्र विशेषणतादिसम्बन्धेनेतरत्वव्यापकत्वं गन्धाभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिध्यति । यत्र तु तादात्म्य(२)सम्बन्धेनेतरव्यापकत्वं गन्धाभावस्य गृह्यते तत्र तादात्म्यसम्बन्धेनेतरस्याभावः सिध्यति । स एवान्योन्याभावः । एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्यति । अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम् । केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते न तु व्यतिरेकव्याप्तिज्ञानं कारणम् । यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते । साध्यप्रसिद्धिस्तु घटादावेव जाता (३)पश्चात्पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति ॥ १४२ ॥ १४३ ॥

तां निर्वक्ति-साध्याभावेति । अन्वये यद् व्यापकं तदभावेत्यर्थः । हेत्वभावस्य-अन्वये यद्व्याप्यं तदभावस्य । अत्र साध्याभावव्यापकत्वकथनं हेतोः साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्याप्तिलाभाय, तादृशाभावप्रतियोगित्वेन पक्षधर्मतानिश्चयस्यैव व्यतिरेक्यनुमितिहेतुत्वात् । तथा चानुमानं त्रि-

(१) यत्संबन्धेनेति । यत्सम्बन्धावच्छिन्न-यद्रूपावच्छिन्न-व्याप्यतानिरूपितव्यापकता गृह्यत इत्यर्थः । (२) तादात्म्यसम्बन्धेनेति । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः सिध्यतीत्यर्थः। येन सम्बन्धेन व्याप्यता गृह्यत इत्यनुक्तौ तु तादात्म्येनेतरस्य व्याप्यता यत्र गृहीता तत्रेतरात्यन्ताभावस्य सिद्धिः स्यादिति भावः ।

(३) ननु घटादौ साध्ये निर्णीते कथं तत्रेतरभेदानुमितिरत आह पश्चादिति । अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वादिति भावः ।

विधं—केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्र केवलान्वयिसाध्यकं केवलान्वयि, यथा इदं वाच्यं प्रमेयत्वादिति । प्रतियोगिव्यधिकरणवृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । संयोगाभावसङ्ग्रहाय प्रतियोगिव्यधिकरणेति । गगनाभावस्य प्रतियोगिरूपात्यन्ताभावप्रतियोगित्वाद्वृत्तिमदिति । एवमगृहीतहेतुसहचारव्यतिरेकिसाध्यकमनुमानं केवलव्यतिरेकि, यथा पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादिति । नन्वेवं व्याप्तिग्रहकाल एव पृथिवीतरभिन्नेति साध्यग्रहसम्भवादनुमानवैयर्थ्यमिति चेन्न, गन्धत्वावच्छेदेनेतरभेदस्य साध्यत्वात् । अत एव पक्षतावच्छेदकं न हेतुरिति वदन्त्याचार्याः । ननु तथापीतरभेदः प्रसिद्धो न वा ? आद्ये सिद्धसाधनं, द्वितीये साध्यप्रसिद्धिं विना साध्याभावज्ञाने व्यतिरेकव्याप्तेर्दुर्ग्रहत्वं स्यादिति चेन्न, साध्यस्य घटादावेव प्रत्यक्षसिद्धत्वात्, पृथिवीतरभिन्नेत्युद्देश्यप्रतीतेरप्रसिद्धत्वात्सिद्धसाधनाभावात् पक्षतावच्छेदकनानात्व एवांशतः सिद्धसाधनस्य दोषत्वात् नन्वेवं पृथिवीतरभिन्ना पृथिवीत्वात् घटवदित्यन्वयिनैवेतरभेदसिद्धेर्व्यतिरेकिवैयर्थ्यमिति चेत्, न अन्वयव्याप्तेरग्रहे व्यतिरेकिस्फूर्तिदशायां व्यतिरेक्यनुमितिजननसम्भवेन व्यतिरेक्यनुमानप्रवृत्तेर्निष्प्रत्यूहत्वादिति वदन्ति ॥ १४३ ॥

अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।
(१)व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४॥

अर्थापत्तिरिति । अर्थापत्तिः प्रमाणान्तरमिति केचन(२) मन्यन्ते । तथाहि—यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीविनो गृहासत्त्वं

---

(१) व्यतिरेकेति । मीमांसकानामर्थापत्तिसामग्रीकाले नैयायिकाभिमततत्स्थानाभिषिक्तानुमितिसामग्र्या नियमतः सत्त्वेऽविवादसूचनाय व्यतिरेकेत्युक्तम्—तथाहि मीमांसकैरर्थापत्तिरापत्तिरूपैव प्रमाणान्तरतयाऽङ्गीक्रियते, आपत्तिं प्रति चापाद्यव्याप्यापादकवत्ताज्ञानं कारणम्, तथा च चैत्रो यदि गृहसत्त्वबहिःसत्त्वान्यतराभाववान् स्यात्, जीवत्वाभाववान् स्यात् इत्यापत्तेर्गृहसत्त्वबाधसहकृताया बहिःसत्त्वकल्पकत्वं तदैव स्यात् यद्येतादृशापत्तेः पूर्वमापाद्यापादकयोर्निश्चयः स्यात्, तादृशव्याप्तिनिश्चयस्य च जीवित्वगृहसत्त्वबहिःसत्त्वयोः व्यतिरेकनिश्चयरूपतया आवश्यकत्वमिति अनुमानेनैव चारितार्थ्यमिति भावः ।

(२) केचन—मीमांसकाः ।

बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्यत इति। तदप्यनुमानेन गतार्थत्वान्नेष्यते। तथाहि—यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते। एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिध्यतीति।

अभावप्रत्यक्षस्यानुभविकत्वादनुपलम्भोऽपि न प्रमाणान्तरम्। किञ्चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकरणकत्वात्प्रत्यक्षत्वम्, ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था।

एवं चेष्टापि न प्रमाणान्तरं तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात्। यत्र च व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४४ ॥

अर्थापत्तिरिति। अर्थापत्तिरप्यतिरिक्तं प्रमाणमिति केचन मन्यन्ते। सा च द्विविधा—दृष्टार्थापत्तिः श्रुतार्थापत्तिश्च। तत्र दृष्टार्थापत्तिर्यथा पुरोवर्तिनि दिवाऽभुञ्जाने दृष्टं पीनत्वं रात्रिभोजनं विनाऽनुपपन्नमिति रात्रिभोजनकल्पनम्। श्रुतार्थापत्तिरपि द्वेधा—अभिधानानुपपत्तिः अभिहितानुपपत्तिश्चेति। तत्राभिधानानुपपत्तिर्यथा द्वारमिति श्रवणेऽन्वयाभिधानानुपपत्त्याऽन्वयाभिधानोपयोगिपदान्तरकल्पनम्। अभिहितानुपपत्तिर्यथा अभिहितस्य स्वर्गसाधनत्वेनोक्तस्य ज्योतिष्टोमादेराशु विनाशिनोऽपूर्वरूपव्यापारं विना स्वर्गसाधनत्वानुपपत्तिरित्यपूर्वकल्पनम्। अत्रोपपाद्यज्ञानं करणं उपपादकज्ञानं फलं पीनत्वमुपपाद्यम्। एवमन्यत्रापि यथायथं बोध्यम्। न चास्या अर्थापत्तेरनुमानेन्तर्भावः सम्भवति अन्वयव्याप्त्यज्ञानेनान्वयिन्यन्तर्भावासम्भवात्, साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगेन व्यतिरेकिणोऽनङ्गीकारादेव तत्रान्तर्भावनिरासात्, तस्मादर्थापत्तिः पृथगेव प्रमाणमिति मीमांसकमतनिरासायाह—अर्थापत्तिस्त्विति। अर्थापत्तिर्न प्रमाणान्तरं यो रात्रौ न भुङ्क्ते स दिवाऽभुञ्जानः सन् पीनो

न भवतीत्यादिव्यतिरेकानुमानेन गतार्थत्वादित्यर्थः । साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य यथोपयोगस्तथोपपादितमधस्तात् ॥ १४४ ॥

सुखं निरूपयति—

सुखं तु जगतामेव काम्यं धर्मेण जायते ।

सुखं त्विति । काम्यमभिलाषविषयः । धर्मेणेति । धर्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थः ॥

सुखं लक्षयति–सुखमिति । अहं सुखीत्याद्यनुगतमतिसिद्धसुखत्वजातिमदित्यर्थः । जगतामेव काम्यं–सर्वात्मनामनुकूलं वेदनीयम् । यद्यप्यनुकूलत्वेन स्ववृत्तित्वेन भवत्वित्याकारकं वेदनं प्रयत्नादेरपि, तथापि जन्येच्छाऽजन्येच्छाविषयभावत्वं तदर्थो बोध्यः । दुखाभावेऽतिव्याप्तिवारणाय भावत्वमिति । प्रयत्नादावतिव्याप्तिवारणायाऽजन्यान्तम् तदिच्छायाः सुखेच्छाजन्यत्वात् । साध्यमाह–धर्मेणेति । एतेन धर्मकार्यतावच्छेदकतयापि सुखत्वं जातिः सिध्यति, तद्वत्त्वं च सुखस्य लक्षणमिति भावः । तच्च चतुर्विधं—वैशेषिकं मानोरथिकं अभ्यासिकं अभिमानिकं चेति । तत्र विषयसंयोगजमाद्यम्। विषयध्यानजं मानोरथिकम् । आसनाद्यभ्यासाज्जायमानं शरीरलाघवादिकृतं तृतीयम्। धनविद्यादिगर्वजं चतुर्थमिति बोध्यम् ।

दुःखं निरूपयति—

अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥

अधर्मेति । अधर्मत्वेन दुःखत्वेन कार्यकारणभाव इत्यर्थः । प्रतिकूलमिति । दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः॥१४५॥

दुःखं लक्षयति–अधर्मजन्यमिति । अधर्मकार्यतावच्छेदकतया सिद्धम्, तथाऽहं दुःखीत्याद्यनुगतमतिसिद्धदुःखत्वजातिमद्दुःखमित्यर्थः । लक्षणान्तरमाह–प्रतिकूलमिति । द्वेषविषय इत्यर्थः । इदमपि सुखवच्चतुर्विधं बोध्यम् ॥ १४५ ॥

इच्छां निरूपयति—

निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।

इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥

निर्दुःखत्व इति । इच्छा द्विविधा - फलविषयिणी उपायविषयिणी च । फलं तु-सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अत एव पुरुषार्थः संभवति । यज्ज्ञातं सत्स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात् । इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः ।

उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् ॥ १४६ ॥

इच्छां निरूपयति-निर्दुःखत्वे सुखे चेच्छेति । इच्छा इच्छात्वजातिमती । सा चानुगतप्रत्यक्षादिच्छामीत्याकारात्, प्रयत्नजनकतावच्छेदकतया च सिद्धा । सा चेच्छा नित्या ईश्वरस्यानित्याऽस्मादृशाम् । सा सुखे सुखत्वप्रकारकतज्ज्ञानात्, निर्दुःखत्वे-दुःखाभावे निर्दुःखत्वप्रकारकतज्ज्ञानात्, उपाये फलेच्छातः फलसाधनताज्ञानादेव भवतीत्यर्थः । एतस्या भेदाः-काममत्सरस्पृहातृष्णालोभमायादम्भा उक्ता न्यायभाष्ये । तत्र कामः-रतीच्छा । मत्सरः-प्रयोजनं विना पराभिमतनिवारणेच्छा । स्पृहा-धर्माविरोधेन प्राप्तीच्छा । तृष्णा-इदं मे न क्षीयतामितीच्छा उचितव्ययाकरणेनापि धनरक्षणेच्छारूपं कार्पण्यं च । लोभः-धर्मविरोधेन परद्रव्येच्छा । माया-पापाद्वञ्चनेच्छा । दम्भः-कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा ॥ १४६ ॥

चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् ।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥

चिकीर्षेति । कृतिसाध्यत्वप्रकारिका कृतिसाध्य(क्रिया)विषयिणीच्छा चिकीर्षा-पाकं कृत्या साधयामीति तदनुभवात् । चिकीर्षां प्रति कृति(१)-साध्यताज्ञानमिष्टसाधनताज्ञानं च कारणम् । तद्धेतुरिति । अत एव वृष्ट्यादौ कृतिसाध्यताज्ञानाभावान्न चिकीर्षा ॥ १४७ ॥

---

(१) ननु कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण चिकीर्षां प्रति हेतुत्वे मानाभावः । तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्धर्मप्रकारकेच्छां प्रति हेतुतायाः क्लृप्तत्वात्कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षायाः संभवादिति चेत् । न । यत्र कृतिसाध्यपाकत्वेनेष्टसाधनत्वं न गृहीतमपि तु शुद्धपाकत्वेन कृतिसाध्यत्वं शुद्धपाकत्वेन चेष्टसाधनत्वं गृहीतं तत्रापि पाकगोचरप्रवृत्तेरानुभविकतया तदनुरोधेन चिकीर्षाया अप्यावश्यकत्वेन तन्निर्वाहाय कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्वात् ।

तत्रोपाये प्रवर्तिका चिकीर्षाप्युपायेच्छा भवति । सा का? तत्राह-चिकीर्षेति । या कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा पाको मत्कृतिसाध्यो भवत्वेवमाद्याकारिका सा चिकीर्षेत्यर्थः । यद्यपि सन्प्रत्ययान्तकृञ्धातुनिष्पन्नचिकीर्षाशब्दस्यार्थः कृतीच्छैव, न तु कृतिसाध्यत्वप्रकारिका क्रियाविषयिणीच्छा-सनो धात्वर्थगोचरच्छावाचित्वात्, तथापि कृतिसाध्यत्वप्रकारकक्रियाविशेष्यकेच्छाभिधायी चिकीर्षाशब्दोऽखण्ड एवेति भावः । अत्रोपायमाह-तद्धेतुरिति । कृतिसाध्यताज्ञानं इष्टसाधनताज्ञानं च कारणमित्यर्थः । न च कृतिसाध्यत्वप्रकारिकेच्छां प्रति कृतिसाध्यताज्ञानस्य हेतुत्वे मानाभावः,कृत्यसाध्यताज्ञानकाले चिकीर्षावारणाय तदुपगमात् । तर्हि कृत्यसाध्यताज्ञानाभावस्यैव प्रतिबन्धकाभावविधया हेतुत्वमङ्गीक्रियतामिति तु, न युक्तं-कृतिसाध्यत्वज्ञानत्वापेक्षया कृत्यसाध्यत्वज्ञानाभावत्वस्य गुरुत्वात्,इच्छायाः समानप्रकारकधीसाध्यत्वेन कृतिसाध्यत्वप्रकारकज्ञानाऽभावकाले चिकीर्षानुदयाच्चेत्यास्तां विस्तरः। स्यादेतत् इष्टसाधनताज्ञानस्य किमिति हेतुत्वमिति चेत्, निष्फलत्वेन ज्ञातेऽपि कृतिसाध्ये चैत्यवन्दनादौ चिकीर्षावारणायेत्यवेहि ॥ १४७ ॥

बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका ।

बलवदिति । बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्धकम्, अतो मधुविषसंपृक्तान्नभोजने न चिकीर्षा । (१)बलवद्द्वेषः प्रतिबन्धक इत्यन्ये(२)॥

आपाते साधने कृतिसाध्ये चिकीर्षापत्तिवारणायाह-बलवद्विष्टेति। बलवदुत्कटं यद्विष्टं द्वेषविषयीभूतं दुःखं तत्साधनताज्ञानं तत्र प्रतिबन्धकं तदभावो हेतुरिति भावः। बलवदनिष्टाननुबन्धित्वज्ञानत्वस्य हेतुतावच्छेदकत्वे बलवदनिष्टत्वप्रकारितानिरूपिताभावविशेष्यताशालित्वादेस्तादृशनिरूप्यनिरूपकभावघटितत्वेन गौरवात्तदघटितबलवदनिष्टसाधनत्वज्ञानाभावत्वेनैव हेतुत्वकल्पनाया उचितत्वादित्यास्तां विस्तरः ।

(१) पाकादिगोचरेच्छायां बलवद्द्वेषविषयसाधनत्वज्ञानजन्यः पाकादिगोचरो द्वेषः प्रतिबन्धकः, प्रतिबंधकद्वयकल्पनापेक्षायां गौरवादिति भावः ।

(२) क्षणविलंबस्य शपथनिर्णेयत्वादित्यन्य इत्यनेनास्वरसः सूचितः ।

तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥

तदहेतुत्वेति । बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः। (कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधनताज्ञानशून्यस्य बलवदनिष्टाजनकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभावात् कस्यचिन्मत इत्यस्वरसो दर्शितः) ॥१४८॥

अप्रामाण्यज्ञानानास्कन्दितबलवदनिष्टाजनकत्वज्ञानत्वापेक्षयाऽप्रामाण्यनिश्चयानास्कन्दिततदनुबन्धित्वज्ञानत्वस्य प्रतिबन्धकतावच्छेदकत्वे गौरवादाह–तदहेतुत्वेति । बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः । बलवदनिष्टाननुबन्धित्वं च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं, तेन न मधुविषसम्पृक्तान्नभोजने चिकीर्षा-इष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तस्य मरणदुःखस्य तेन जननादिति । संक्षेपः । कस्यचिदित्यनेन।स्वरसः सूचितः,स चोक्तप्रकारो बोध्यः ॥१४८॥

द्वेषं निरूपयति—

द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम् ।

द्विष्टसाधनतेति । दुःखोपायविषयकं द्वेषं प्रति बलवद्द्विष्टसाधनताज्ञानं कारणमित्यर्थः । बलवदिष्टसाधनताज्ञानं प्रतिबन्धकम् , तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः ॥

द्वेषं लक्षयति–द्विष्टेति । बलवद्दुःखसाधनताज्ञानं द्वेषस्य कारणं,तेन नान्तरीयकदुःखजनके पाकादौ न द्वेष इति भावः ॥ लक्षणमस्य द्वेषमीत्यनुगतमतिप्रमाणकद्वेषत्वजातिमत्त्वम् । एतस्यावान्तरभेदाः—क्रोधेर्ष्याऽसूयाद्रोहाभिमर्षाभिमाना उक्ता न्यायभाष्ये । तत्र क्रोधः–शरीरेन्द्रियाधिष्ठानवैकल्यहेतुर्ज्वलनात्मकः । ईर्षा–दुरन्तदापादानामिव साधारणवस्तुगृहीतरि द्वेषः।असूया– रगुणासहनम् । द्रोहः·नाशाय द्वेषः । अमर्षः–अपकारासहिष्णुता ॥ अभिमानः–असमर्थस्यात्मनि द्वेषः ॥

प्रयत्नं निरूपयति—

प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥

एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् ।

प्रवृत्तिश्चेति । प्रवृत्ति–निवृत्ति–जीवनयोनियत्नभेदात्प्रयत्नस्त्रिविध इत्यर्थः ॥

यत्नं निरूपयति–प्रवृत्तिश्चेति । प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात्प्रयत्नस्त्रिविध इत्यर्थः । प्रयत्नमस्य करोमीत्यनुगतमतिसिद्धं चेष्टादिकारणतावच्छेदकतया च सिद्धं प्रयत्नत्वं जातिः ॥

चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।

चिकीर्षेत्यादि । मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः । कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति ।

कार्यताज्ञानं प्रवर्तकमिति गुरवः । तथाहि–ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति । (१)सा च कृतिसाध्यताज्ञानसाध्या–इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात् । चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा । तत्र कृतिसाध्यत्वं प्रकारः,तत्प्रकारकज्ञानं चिकीर्षायां तद्द्वारा च प्रवृत्तौ हेतुर्न त्विष्टसाधनताज्ञानं तत्र हेतुः–( नित्ये तदभावात् ) कृत्यसाध्येऽपि ( चन्द्रमण्डलानयनादौ ) प्रवृत्त्यापत्तेः । ननु कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेत् । न । तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात् । न च द्वयोरपि हेतुत्वं, गौरवात् । ननु त्वन्मतेऽपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः कार्यताज्ञानस्य सत्त्वादिति चेत् । न । (२)स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्तकत्वात् ।

---

(१) सा च–चिकीर्षेत्यर्थः ।

(२) स्वं प्रवर्तमानः पुरुषस्तद्विशेषणं काम्ये कामना नित्ये कालशौचादि, तद्वत्ता—पक्षे तत्संबन्धः, तस्य प्रतिसंधानं ज्ञानमित्यर्थः । तस्य कार्यताज्ञानहेतुता लिङ्गज्ञानविधया । तथाहि—पाको मत्कृतिसाध्यः मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वादित्यनुमानम् ।

काम्ये हि यागपाकादौ कामना स्वविशेषणम्, ततश्च बलवद-निष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्यताज्ञानम्, ततः प्रवृत्तिः। तृप्तश्च भोजने न प्रवर्तते–तदानीं कामनायाः पुरुषविशेषणत्वाभावात्। नित्ये च शौचादिकं पुरुषविशेषणम्, तेन शौचाद्विज्ञानाधीनकृति-साध्यताज्ञानात्तत्र प्रवृत्तिः। ननु तदपेक्षया लाघवेन बलवदनिष्टाननु-बन्धीष्टसाधनताज्ञानविशिष्टकार्यताज्ञानमेव हेतुरस्तु, (१)बलवदनिष्टा-ननुबन्धित्वं चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं (२)बलवद्द्वे-षविषयदुःखाजनकत्वं वेति चेत्। न। इष्टसाधनत्वकृतिसाध्यत्वयोर्युग-पज्ज्ञातुमशक्यत्वात्साध्यत्वसाधनत्वयोर्विरोधात्। असिद्धस्य हि साध्यत्वं सिद्धस्य च साधनत्वम्। न चैकमेकेनैकदा सिद्धमसिद्धं चेति ज्ञायते, तस्मात्कालभेदादुभयं ज्ञायत इति।

मैवम्। लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्य-ताज्ञानस्य हेतुत्वात। न च साध्यत्वसाधनत्वयोर्विरोधो, यदा कदाचित् साध्यत्वसाधनत्वयोरविरोधादेकदा साध्यत्वसाधनत्वयोश्चाज्ञानात्।

नव्यास्तु–ममेदं कृतिसाध्यमिति–ज्ञानं न प्रवर्तकम्, अनागते तस्य ज्ञातुमशक्यत्वात्। किन्तु यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्तते। तेनौदनकामस्य तत्साधनताज्ञानव-तस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवृत्तिरित्याहुः।

तन्न। स्वकल्पितलिप्याादिप्रवृत्तौ यौवने कामोद्भेदादिना संभोगादौ च तदभावात।

---

(१) ननु बलवदनिष्टाजनकत्वज्ञानं न हेतुः क्वचिद्बह्वायाससाध्ये बहुतरस्यापि दुःखस्याबल-वत्त्वात्, क्वचिदल्पस्य दुःखस्य बलवत्त्वादनुगतस्य बलवत्त्वस्य दुर्वचत्वादित्यत आह—बलव-दनिष्टाननुबन्धित्वं चेति।

(२) नन्वेवंसति नरकसाधनत्वेन प्रमिते परदाराधिगमनादौ रागोत्कट्यान्न प्रवर्तेत, इष्टो-त्पत्त्यनान्तरीयकदुःखजनकत्वेन तस्य निश्चयादत आह—बलवद्द्वेषेति।

(१)इदं तु बोध्यम्। इदानीन्तनेष्टसाधनत्वादिज्ञानं प्रवर्तकं, तेन भावियौवराज्ये बालस्य न प्रवृत्तिः—तदानीं कृतिसाध्यत्वाज्ञानात्। एवं तृप्तश्च भोजने न प्रवर्तते—तदानीमिष्टसाधनत्वाज्ञानात्। प्रवर्तते च रोषदूषितचित्तो विषादिभक्षणे—तदानीं बलवदनिष्टाननुबन्धित्वाज्ञानात्। न चास्तिकस्यागम्यागमने शत्रुवधादिप्रवृत्तौ च कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यम्, उत्कटरागादिना नरकसाधनताधीतिरोधानात्। वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती किन्त्विष्टसाधनताज्ञानादिच्छामात्रम्। कृतिश्च प्रवृत्तिरूपा बोध्या, तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे न प्रवृत्तिः। (२)इत्थञ्च प्रवर्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवार्थः। (३)इत्थञ्च 'विश्वजिता यजेत' इत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते। ननु 'अहरहः संध्यामुपासीत' इत्यादाविष्टानुत्पत्तेः कथम् प्रवृत्तिः? न चार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम्, तथा सति काम्यत्वेन नित्यत्वहान्यापत्तेः, कामनाभावे चाकरणापत्तेः, इत्थञ्च यत्र फलश्रुतिस्तत्रार्थवादमात्रमिति चेत्। न—ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात्। न च कामनाभावेऽकरणतापत्तिः, त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात्। (४)ननु वेदबोधितकार्यताज्ञानात्प्रवृत्तिः संभवत्येवेति चेन्न। (५)इष्टसाधनत्वमविज्ञाय तादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसंभवात्।

(१) नान्विष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वे भावियौवराज्ये प्रवृत्त्यापत्तिरत आह इदं तु बोध्यमिति।

(२) प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य हेतुत्वे चेत्यर्थः।

(३) नन्वेवं विश्वजिता यजेतेत्यादौ फलाश्रवणेनेष्टसाधनताज्ञानाभावात्प्रवृत्तिर्न स्यादत आह इत्थं चेति।

(४) ननु नित्यगोचरप्रवृत्तौ इष्टसाधनताज्ञानं कारणमेव नेत्यनेनैवोपपत्तौ किमर्थं नित्यस्यापि काम्यत्वं कल्पनीयमत आह—नन्विति।

(५) इष्टसाधनत्वमिति। अन्वयव्यतिरेकाभ्यां प्रवृत्तित्वावच्छिन्नं प्रति इष्टसाधनताज्ञानस्य हेतुत्वादिति भावः।

यदपि पण्डापूर्वं फलमिति, तदपि न—कामनाभावेऽकरणापत्तेस्तौल्यात् । कामनाकल्पने त्वार्थवादिकफलमेव(१) रात्रिसत्रन्यायात्कल्प्यते, अन्यथा प्रवृत्त्यनुपपत्तेः । तेनानुत्पत्तिमेव प्रत्यवायस्यान्ये मन्यन्ते । एवम्—

सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतापपास्ते यान्ति ब्रह्मलोकमनामयम् ॥

एवम्—

दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्—

इत्यादिवचनप्रतिपादितब्रह्मलोकादिकमेव फलमस्तु । न च पितृप्रीतिः कथं फलं ? व्यधिकरणत्वादिति वाच्यम्, गयाश्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात् । अत एवोक्तं—शास्त्रदर्शितं फलमनुष्ठानकर्तरीत्युत्सर्गे—इति । पितॄणां मुक्तत्वे तु स्वस्य स्वर्गादिफलं, यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गजनकत्वात् । पण्डापूर्वार्थं प्रवृत्तिश्च न संभवति । न हि तत्सुखदुःखाभाववत्त्वतः पुरुषार्थो, न वा तत्साधनम् । प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेदित्थम्—यथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः, एवं प्रत्यवायाभावस्य सत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणताया दुःखप्रागभावं प्रत्यपि सुवचत्वात् । एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति । ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः ? इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेत् । न । तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः, किन्तु बलवदनिष्टाननुबन्धित्वमात्रं, तदभावश्च नञा

(१) रात्रिसत्रन्यायादिति । यथाहि रात्रिसत्रशब्दवाच्यानां ज्योतिर्गौरित्यादिवाक्योत्पन्नकर्मणां फलजिज्ञासायामत्यन्ताश्रुतस्वर्गादिकल्पने गौरवात् विश्वजिन्न्यायापवादेन 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यर्थवादश्रुतौ प्रतिष्ठैव फलमिति सिद्धान्तितं, तथात्राप्यार्थवादिकं ब्रह्मलोक एव फलं लाघवादित्यर्थः ।

बोध्यते । (१)अथवा बलवदनिष्टाननुबन्धित्वाविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः । तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे (२)विश्राम्यति । ननु–'श्येनेनाभिचरन् यजेते'त्यादौ कथं बलवदनिष्टाननुबन्धित्वं विध्यर्थः? श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात् । न च वैधत्वान्न निषेध इति वाच्यम्, अभिचारे प्रायश्चित्तोपदेशात् । न च मरणानुकूलव्यापारमात्रं यदि हिंसा, तदा खड्गकारस्य कूपकर्तुश्च हिंसकत्वापत्तिर्गलल्ग्नान्नभक्षणजन्यमरणे स्वात्मवधत्वापत्तिश्चेति वाच्यम्, मरणोद्देश्यकत्वस्यापि विशेषणत्वात्, अन्योद्देश्यकक्षिप्तनाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तम्–इति चेत् । न । तत्र बलवनिष्टाननुबन्धित्वस्य विध्यर्थत्वाभावात् । वस्तुतः श्येनवारणायादृष्टाद्वारकत्वेन विशेषणयिम् । अत एव काशीमरणाद्यर्थं कृतशिवपूजादेरपि न हिंसात्वम् । न च साक्षान्मरणजनकस्यैव हिंसात्वं, श्येनस्तु न तथा, किन्तु तज्जन्यापूर्वमिति वाच्यम्, खड्गाघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः ।

केचित्तु श्येनस्य हिंसा फलं न तु मरणम्, तेन श्येनजन्यखड्गघातादिरूपा हिंसाऽभिचारपदार्थः, तस्य च पापजनकत्वम्, अतः श्येनस्य वैधत्वात्पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्तन्त इत्याहुः ।

(३)आचार्यास्तु–आप्ताभिप्रायो विध्यर्थः । 'पाकं कुर्याः' इत्या-

---

(१) प्रवृत्तिं प्रति कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानत्वेनैकस्यैव हेतुत्वं लाघवान्न तु कृतिसाध्यत्वादिप्रत्येकविषयकज्ञानत्वेन गौरवादतो विधेरपि विशिष्टमेव शक्यं वाच्यम् । एवं च निषेधस्थले विशिष्टाभावो विधिसमभिव्याहृतनञा बोध्यत इत्यभिप्रायवानाह–अथवेति ।

(२) विश्राम्यतीति । एवं च इष्टसाधनत्वादिमति कलञ्जभक्षणादौ विशिष्टाभावो बोध्यमानो बलवदनिष्टाननुबन्धित्वाभावे पर्यवस्यतीति भावः ।

(३) विध्यर्थश्चाप्ताभिप्रायः स च स्वेष्टसाधनतानुमापकः; इष्टसाधनताज्ञानं च प्रवर्तकमित्युदयनाचार्यमतमाह आचार्यास्त्विति ।

दावाज्ञादिरूपेच्छावाचित्ववल्लिङ्मात्रस्येच्छावाचित्वं लाघवात् । एवं च 'स्वर्गकामो यजेत' इत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः । ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्तते । कलञ्ज-भक्षणे तदभावान्न प्रवर्तते । यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति (१)विधिरेव तावद्गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम् । न च कर्त्रस्मरणं (२)बाधकं, कापिलकणादादिकमारभ्याद्यपर्यन्तं कर्तृस्मरणस्यैव प्रतीय-मानत्वात्, अन्यथा स्मृतीनामप्यकर्तृकत्वापत्तेः । तत्रैव कर्तृस्मरणमस्तीति चेद्वेदेऽपि 'छन्दांसि जज्ञिरे तस्मात्' इत्यादिकर्तृस्मरणमस्त्येव । एवं

प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते ।

इत्यपि द्रष्टव्यम् ।

(३)स्वयंभूरेष भगवान्वेदो गीतस्त्वया पुरा ।
शिवादिऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ॥

इति तु वेदस्य स्तुतिमात्रम् । न च पौरुषेयत्वे भ्रमादिसंभवादप्रामाण्यं स्यादिति वाच्यम्, नित्यसर्वज्ञत्वेन निर्दोषत्वात् । अत एव पुरुषान्तरस्य भ्रमादिसम्भवान्न कपिलादेरपि कर्तृत्वं वेदस्य । किञ्च वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात्सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति संक्षेपः ॥

उपादानस्येति । उपादानस्य—समवायिकारणस्य, अध्यक्षं—प्रत्यक्षं प्रवृत्तौ कारणमिति ॥

तत्र प्रवृत्तौ कारणमाह—चिकीर्षेति । मत्कृत्या साधयामीतिच्छां विना प्रवृत्तेरदर्शनात् चिकीर्षा प्रवृत्तौ हेतुः । कृत्यसाध्ये चन्द्रस्पर्शे प्रवृत्त्यदर्शनात् कृतिसाध्यताज्ञानं हेतुः । कृतिसाध्यत्वज्ञानेपि विषभ-

---

(१) विधिरेवेति । वक्तृाभिप्रेच्छाया बोधने विधेः सामर्थ्याभावाद्विधिरेव वेदवक्तरीश्वरे मानमिति भावः ।

(२) अस्मरणं स्मृतिभिरबाधनम्, तथा च वेदोऽपौरुषेयः अस्मर्यमाणकर्तृकत्वादित्यनुमानमेव बाधकमित्यर्थः ।

(३) वेदस्य नित्यत्वबोधकं भारतादावेव तस्याकर्तृत्वे प्रमाणं भविष्यतीत्याशङ्कते—स्वयंभूरिति ।

क्षणादौ प्रवृत्त्यदर्शनादिष्टसाधनताज्ञानं हेतुः। तदुभयसत्त्वेपि परोक्षे प्रवृत्त्यदर्शनादुपादानप्रत्यक्षं हेतुरित्यर्थः। उपादानपदमत्र न समवायिकारणपरं किन्त्वधिष्ठानमात्रपरम्, अन्यथा शब्दसाध्यकप्रवृत्तिर्मृदङ्गादौ न स्यात् शब्दसमवायिकारणस्य गगनस्यातीन्द्रियत्वात्। तथा च तत्साध्यकप्रवृत्तिं प्रति तदधिष्ठानगोचरलौकिकप्रत्यक्षस्य हेतुत्वमिति पर्यवसितम्। यद्यपि मधुविषसम्पृक्तान्नभोजने प्रवृत्तिवारणाय प्रवृत्तौ बलवदनिष्टानुबन्धित्वज्ञानाभावोऽपि हेतुर्वक्तुं युक्तः; तथापि स नोक्तः—चिकीर्षां प्रति तस्य हेतुतया तत्र चिकीर्षाभावादेव न प्रवृत्तिर्भवतीति। ननु तर्हि कृतिसाध्यताज्ञानादेरपि चिकीर्षायामेव हेतुत्वं स्यान्न तु प्रवृत्ताविति चेन्न, व्यापारेण व्यापारिणोऽनन्यथासिद्धत्वात्। अत एव बलवदनिष्टाननुबन्धित्वज्ञानस्यापि प्रवृत्तौ हेतुत्वमिच्छन्तीत्यन्यत्र विस्तरः॥

निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टोपायनत्वाधीर्यदि॥ १५१॥

निवृत्तिरिति। द्विष्टसाधनताज्ञानस्य निवृत्तिं प्रति सुखसाधनविषयकजनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः॥१४९ १५० १५१॥

निवृत्तिरिति। द्वेषः फलगतो बोध्यः। तथाच फलगतो द्वेषो द्विष्टसाधनताज्ञानं चान्वयव्यतिरेकाभ्यां निवृत्तिं प्रति कारणमित्यर्थः॥ १४९॥ १५०॥ १५१॥

यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत्।

यत्न इति। जीवनयोनियत्नो यावज्जीवनमनुवर्तते। स चातीन्द्रियः।

यत्न इति। जीवनहेतुर्यत्नो यावज्जीवमनुवर्तते, स चातीन्द्रियः।

तत्र प्रमाणमाह—

शरीरे प्राणसंचारे कारणं परिकीर्तितः॥ १५२॥

शरीर इति। प्राणसञ्चारो हि अधिकश्वासादिः यत्नसाध्यः। इत्थं च प्राणसंचारस्य सर्वस्य यत्नसाध्यत्वमनुमानात्। प्रत्यक्षयत्नस्य बाधाच्चातीन्द्रिययत्नसिद्धिः। (१) स एव जीवनयोनिर्यत्नः॥ १५२॥

---

(१) नव्यास्तु जीवनयोनियत्ने मानाभावः, प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्ममनोयोगरूपाज्जीवनात्तत्प्रयोजकादृष्टाद्वा संभवादित्याहुः।

तत्र प्रमाणमाह–शरीर इति । शरीरे साहजिको यः प्राणसञ्चारस्तत्रेत्यर्थः । अधिश्वासादिलक्षणे प्राणसञ्चारे प्रत्यक्षयत्नजन्यत्वस्यानुभविकत्वात्प्राणसञ्चारत्वावच्छेदेन तदनुमितौ परिशेषादत्रातीन्द्रिययत्नसिद्धिरिति भावः । नव्यास्तु जीवनयोनियत्ने मानाभावः–प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्ममनोयोगरूपाज्जीवनाद्वा सम्भवात्कथितानुमानस्याप्रयोजकत्वादन्यथा एकत्र यत्ने ज्ञानजन्यत्वदृष्टान्तेन जन्ययत्नत्वावच्छेदेन ज्ञानजन्यत्वकल्पनापत्त्या सुषुप्तौ ज्ञानादेरप्यतीन्द्रियस्य कल्पनापत्तेरिति प्राहुः । वेदान्तिनस्त्वत एव सुषुप्तौ ज्ञानमिच्छन्तीति रहस्यम् ॥ १५२ ॥

गुरुत्वं निरूपयति—

अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्यं नित्यमुदाहृतम् ॥ १५३ ॥
तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि ।

अतीन्द्रियमिति । अनित्य इति । अनित्ये द्व्यणुकादौ तद्गुरुत्वमनित्यम् । नित्ये परमाणौ नित्यम् । गुरुत्वमित्यनुवर्तते । तद्गुरुत्वमसमवायि–असमवायिकारणम् । पतनेति । (१)आद्यपतन इत्यर्थः ।

गुरुत्वं निरूपयति–अतीन्द्रियमिति । अनेन गुरुत्वे न प्रत्यक्षं मानं किन्त्वनुमानमित्युक्तम् । तच्च–संयोगाद्यसमवधानकालीना क्रिया असमवायिकारणजन्या क्रियात्वात् संयोगादिजन्यक्रियावदिति । अन्येतरबाधदर्शाद्गुरुत्वसिद्धिः ।

अनित्ये–द्व्यणुकादौ, तद्–गुरुत्वमनित्यं, नित्ये–परमाणौ नित्यं, गुरुत्वमित्यनुवर्त्तते ॥

तत्–गुरुत्वं, असमवायि–असमवायिकारणम् । पतनेति । आद्यपतनेत्यर्थः । पतनमधःसंयोगजनककर्मविशेषः, तथा चाद्यपतनासमवायिकारणत्वं लक्षणमिति भावः । क्रियाजनके वाय्वादिसंयोगेऽतिव्याप्तिवारणाय पतनपदम् । वेगजन्यद्वितीयादिपतनासमवायिकारणे

(१) द्वितीयादिपतनस्य वेगासमवायिकारणकत्वादाह—आद्ये इति । एवंच संयोगासमवधानकालीना क्रिया गुणासमवायिकारणिका क्रियात्वात् संयोगजन्यक्रियावदित्यनुमानेन गुरुत्वसिद्धिरिति भावः ।

वेगेऽतिव्याप्तिवारणायाद्यपदम्। द्रव्ये समवायिकारणेऽतिव्याप्तिवारणायासमवायिकारणपदं बोध्यम्। ननु सुवर्णादेरपि पतनात्तत्र गुरुत्वाभावाद्व्यभिचार इति वाच्यम् । पार्थिवभागनिष्ठगुरुत्वेनैव पतनसम्भवात्। गुरुत्वाश्रयसम्बद्धस्यागुरोः पतनवत्तत्सम्बद्धतेजसोऽपि पतनसम्भवादित्यन्यत्र विस्तरः ॥

द्रवत्वं निरूपयति—

सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥ १५४ ॥
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।
परमाणौ जले नित्यमन्यत्रानित्यमिष्यते ॥ १५५ ॥

सांसिद्धिकमिति । द्रवत्वं द्विविधं–सांसिद्धिकं नैमितिकं चेत्यर्थः ।

परमाणाविति । जलपरमाणौ द्रवत्वं नित्यमित्यर्थः । अन्यत्र–पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यम् ॥१५३॥१५४॥१५५॥

द्रवत्वं निरूपयति–सांसिद्धिकमिति । द्रवत्वं द्विविधं–सांसिद्धिकं नैमित्तिकं चेत्यर्थः ॥ १५३ ॥ १५४ ॥

सांसिद्धिकं–नैसर्गिकं–अवयवद्रवत्वजन्यमिति यावत् । द्वितीयं-नैमित्तिकमग्निसंयोगविशेषासमवायिकारणकम् ।

परमाणाविति । जलपरमाणौ द्रवत्वं नित्यमन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ चानित्यम् ॥ १५५ ॥

कुत्रचित्तेजसि कुत्रचित्पृथिव्यां च नैमित्तिकं द्रवत्वम् तत्र को वा नैमित्तिकार्थस्तद्दर्शयति—

नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ।

नैमित्तिकमिति । वह्नीति पदं तेजोऽर्थकम्। तथाच (१)अग्निसंयोगजन्यं नैमित्तिकं द्रवत्वम् । तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां च वर्तत इत्यर्थः ॥

वन्हिसंयोगान्नैमित्तिकं क ? तदाह–नैमित्तिकमिति । घृतादिष्वित्यादिपदात्तेजसि स्वर्णादौ। इयांस्तु विशेषः–स्वाभाविकनाशे आश्रयनाश एव हेतुः, नैमित्तिकनाशे क्वचिदग्निसंयोगः क्वचिदाश्रयनाश

(१) अग्निसंयोगासमवायिकारणकमित्यर्थः ।

इति बोध्यम्। न च नैमित्तिकद्रवत्वस्य परमाणुवृत्तित्वे मानाभावः, पाकस्य घृतादिष्विव घृतादिपरमाणुष्वर्जनयितया तत्रापि तत्सिद्धेरिति वदन्ति।

परे तु रूपरसादिजनकपाकस्य लाघवेनैक्यात्तस्यैव द्रवजनकतया परमाणौ तत्सिद्धिरित्याहुः॥

द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहे तु तत्॥ १५६॥

द्रवत्वं स्यन्दने हेतुरिति। असमवायिकारणमित्यर्थः। सङ्ग्रहे—सक्तुकादिसंयोगविशेषे। तत्—द्रवत्वं,(१) स्नेहसहितमिति बोद्धव्यम्। तेन द्रुतसुवर्णादीनां न सङ्ग्रहः॥ १५६॥

लक्षणमाह—स्यन्दन इति। स्यन्दनं जलदेशान्नीचदेशसंयोगजनकक्रियाविशेषस्तस्यासमवायिकारणमित्यर्थः। स्यन्दनमत्राद्यं ग्राह्यं तथा चाद्यस्यन्दनासमवायिकारणत्वं लक्षणमिति भावः। द्वितीयस्यन्दनासमवायिकरणे वेगेऽतिव्याप्तिवारणारणायासमवायिकारणपदम्। सङ्ग्रह इति। सङ्ग्रहः—सक्तुकादेः पिण्डीभावे हेतुः संयोगविशेषस्तत्र सांसिद्धिकद्रवत्वं स्नेहसहितं निमित्तकारणमित्यर्थः। तेन द्रुतस्वर्णादीनां न सङ्ग्रहः। न च स्नेहेनान्यथासिद्धिः, विनिगमकाभावेन तदुभयहेतुत्वसिद्धेरित्यन्यत्र विस्तरः॥ १५६॥

स्नेहं निरूपयति—

स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ।
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता॥ १५७॥

स्नेहो जले इति। जल एवेत्यर्थः। असौ—स्नेहः। ननु पृथिव्यामपि तैले स्नेह उपलभ्यते, न चासौ जलीयः, (२)तथा सति दहनप्रातिकूल्यं स्यादत आह—तैलान्तर इति। तत्प्रकर्षात्स्नेहप्रकर्षात्। तैले उपलभ्यमानः स्नेहोऽपि जलीय एव, तस्य प्रकृष्टत्वादग्नेरानुकूल्यम्। अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः॥ १५७॥

स्नेहं निरूपयति—स्नेह इति। सङ्ग्रहाख्यसंयोगविशेषजनकगुण इ-

(१) सांसिद्धिकमित्यर्थः। तथाच सांसिद्धिकद्रवत्वत्वेन हेतुत्वान्न सुवर्णादिद्रवत्वस्य संग्रहः।
(२) तथासति—तैलान्तः जलभागस्वीकारे।

त्यर्थः । तथाच तादृशगुणत्वं, स्नेह इत्यनुगतमतिसिद्धस्नेहत्वजातिमत्त्वं वा लक्षणमिति भावः । जल इति । जलं एवेत्यर्थः । सः—स्नेहः । ननु पृथिव्यामपि तैले स्नेह उपलभ्यते, न चासौ जलीयः, तथासति दहननाशप्रसङ्गात् दहननाशं प्रति संयोगेन जलस्य हेतुत्वादत आह—तैलान्तर इति । तत्प्रकर्षात्—तैले प्रतीयमानस्नेहोऽपि तैलान्तर्गतजलभागनिष्ठ एव तस्य प्रकृष्टत्वादग्नेरानुकूल्यम्, अपकृष्टस्नेहं हि जलं विनाशयतीति भावः ॥ १५७ ॥

संस्कारं निरूपयति—

संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।

संस्कारेति । वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविध इत्यर्थः ॥

मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥

मूर्तमात्र इति । कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः । शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते, (१)तेन च पूर्वकर्मनाशस्तत उत्तरं कर्म । एवमग्रेऽपि । विना च वेगं कर्मणः कर्मप्रतिबन्धकत्वात्पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात् । यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ॥ १५८ ॥

संस्कारं निरूपयति—संस्कारभेद इति । वेग—स्थितिस्थापक—भावना—भेदात्संस्कारस्त्रिविध इत्यर्थः । लक्षणं तु संस्कारव्यवहारकारणीभूतज्ञानविषयत्वम्, आत्मविशेषगुणवृत्तिमूर्तवृत्तिगुणत्वव्याप्यजातिमत्त्वं वा । अत्रात्ममनःसंयोगवारणाय विशेषगुणवृत्तीति । मूर्तमात्रे त्विति । अनेन व्यापकेषु वेगो नास्तीति ज्ञापितम् । तदुपपादयति कर्मज इति । वेगो द्विविध इत्यर्थः । लक्षणमस्य वेग इत्यनुगतमतिसिद्धं क्रियाविशेषजनकतावच्छेदकतया च सिद्धं वेगत्वं जातिः । भवति हि वेगः क्रियाविशेषहेतुः यथा उत्तरसंयोगस्य क्रियानाशकतया बाणादेरुत्तरदेशे पर्णादौ संयोगेऽपि क्रियान्तरदर्शनात् सा वेगजन्येति सङ्क्षेपः । तत्र कर्मजः बाणादौ, तत्र पूर्वकर्मनाशस्योत्तरकर्मणश्च सिद्धये कर्मजनितवेगस्य मध्येऽङ्गीकारात् । वेगजो यथा वेग-

(१) तेनेति । कर्मनाशकस्योत्तरसंयोगस्य तदानीमभावाद्वेगस्यैव कर्मनाशकत्वं कल्प्यत इति भावः ।

वता कपालेन जनिते घटे वेगो जायते इति सङ्क्षेपः ॥ १५८ ॥

स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥१५९॥

स्थितिस्थापकेति । आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य(१) स्थितिस्थापकसाध्यत्वात् । केचिदिति । चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः । असौ–स्थितिस्थापकः । क्वचिदाकृष्टशाखादौ ॥ १५९ ॥

स्थितिस्थापकेति । आकृष्टस्य शाखादेः परित्यागे पुनस्तथैव स्थापकः संस्कार इत्यर्थः । अत एवान्वर्थेयं संज्ञा–स्थितवत्स्थापयतीति व्युत्पत्तेः । क्षिताविति । मानाभावेन जलाद्यवृत्तित्वात् क्षितिमात्रवृत्तित्वमित्यर्थः । केचिदिति । क्षित्यादिषु चतुर्षु स्थितस्थापकं मन्यन्ते तदप्रमाणमिति भावः । तत्–स्थितिस्थापकं, क्वचित्–आकृष्टे शाखादौ । एतेनास्य लक्षणं क्रियाविशेषजनकतावच्छेदकतया सिद्धं स्थितिस्थापकत्वं जातिरिति सूचितम् ॥ १५९ ॥

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥

भावनाख्य इति । तस्य–संस्कारस्य । उपेक्षात्मकज्ञानात्संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तम् । तत्संशयात्संस्कारस्यानुत्पत्तेर्निश्चय इत्युक्तम् । तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः । ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं, तेनोपेक्षादिस्थले न स्मरणम् । इत्थं च संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेत् । न । विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् । किञ्चोपेक्षास्थले संस्कारकल्पनाया गुरुत्वात्संस्कारं प्रति चोपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् ॥ १६० ॥

भावनाख्यं निरूपयति–भावनाख्य इति । जीववृत्तीत्यनेन जीववृ-

(१) स्थितिस्थापकसाध्यत्वादिति । वेगस्य तूत्तरसंयोगजनकक्रियाजनकत्वं ननु यथापूर्वसंयोगजनकक्रियाजनकत्वमिति न वेगेन स्थितिस्थापकस्यान्यथासिद्धिरिति भावः ।

त्तिसंस्कारत्वं लक्षणं सूचितम् । लक्षणान्तरं ज्ञापयिष्यन् तस्य कारणं निर्वक्ति-उपेक्षानात्मक इति । प्रवृत्तिनिवृत्त्योरजनको यस्तद्भिन्न इत्यर्थः । उपेक्षात्मकज्ञानात्संशयाच्च स्मृतेरदर्शनात् स्मृतिहेतुसंस्कारं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वमिति भावः । स्मृतिं प्रत्येव हेतुत्वं कल्प्यतामिति, तु न युक्तम्-उपेक्षाज्ञानादिस्थले पण्डसंस्कारप्रसङ्गभिया संस्कारं प्रति तथाविधनिश्चयत्वेन हेतुताया अवश्यवक्तव्यतया स्मृतिं प्रति पुनस्तत्कल्पनायां मानाभावात् गौरवाच्चेत्यन्यत्र विस्तरः । अनेन तादृशनिश्चयजन्यतावच्छेदकातीन्द्रियधर्मवत्त्वमपि लक्षणमिति लब्धम् ॥ १६० ॥

स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।

(१)असौ-संस्कारः । तत्र प्रमाणं दर्शयति-स्मरण इति । यतः स्मरणं प्रत्यभिज्ञानं च जनयत्यतः संस्कारः कल्प्यते । विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात्स्वस्वव्यापारान्यतराभावे (२)कारणत्वासंभवात् । न च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वे प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम्, अप्रयोजकत्वात् । (३)परे त्वनुद्बुद्धसंस्कारात्प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः ॥

तत्र प्रमाणं दर्शयति-स्मरण इत्यादि । स घट इत्यादिस्मृतौ सोऽयमित्यादिप्रत्यभिज्ञायां चासौ संस्कारस्ताद्रूप्येण कारणमित्यर्थः । व्यापारं विना निश्चयस्याशुविनाशिनः कालान्तरभाविस्मृतिजननेऽसामर्थ्यादिति भावः । तथा च घटत्वादिप्रकारकस्मृतिजनकतावच्छेदकधर्मवत्त्वमपि लक्षणमिति प्राप्तम् । ज्ञानस्मृत्योर्विशिष्य हेतुहेतुमद्भावानङ्गीकाराच्च ज्ञानेऽतिव्याप्तिरिति बोध्यम् । ननु प्रत्यभिज्ञायाः संस्कारजन्यत्वे कुतो न स्मृतित्वमिति चेत्, संस्कारमात्रजन्यत्वाभावादित्यवेहि । विस्तरस्त्वन्यत्रावसेयः ॥

---

(१) उद्देश्यवाचकपदस्य प्रागपेक्षितत्वात्तथाऽन्वयप्रदर्शनार्थमुदीच्यस्याप्यसावित्यस्य प्राग्धारणमिति बोध्यम् ।

(२) कार्यान्यवहितप्राक्क्षणवृत्तित्व-स्वस्वव्यापारान्यतरकत्वस्यैव कारणतापदार्थत्वादित्यर्थः ।

(३) मणिकृन्मतं प्रदर्शयति -परे त्विति ।

अदृष्टं निरूपयति—

धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥ १६१ ॥

गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः ।

धर्माधर्माविति । स्वर्गादीति । स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म इत्यर्थः । (१)तत्र प्रमाणं दर्शयितुमाह—यागादीति । (२)यागादिव्यापारतया धर्मः कल्प्यते । अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात् । तदुक्तमाचार्यैः—

चिरध्वस्तं फलायालं न कर्मातिशयं(३) विना । इति ।

ननु यागध्वंस एव व्यापारः स्यात् । न च प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वं, सर्वत्र तथात्वे मानाभावात्, न च त्वन्मते फलानन्त्यं, मन्मते चरमफलस्यापूर्वनाशकत्वान्न तथात्वमिति वाच्यम्, कालविशेषस्य सहकारित्वादित्यत आह—गङ्गास्नानेति । गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः ॥

अदृष्टं निरूपयति—धर्माधर्माविति । धर्माधर्मान्यतरत्वमेवादृष्टत्वमित्यर्थः । धर्म इति । स्वर्गादिसाधनं—स्वर्गाद्यसाधारणं कारणम् । स्वर्गपदेनात्र सुखमात्रस्यादिपदेन शरीरेन्द्रियादेः परिग्रहः । तथाच सुखाद्यसाधारणकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं लक्षणं लब्धम्, तेन कीर्तनादिनाश्ये धर्मे नाव्याप्तिरिति बोध्यम् ॥ १६१ ॥

अत्र प्रमाणं दर्शयितुमाह—यागादीति । आदिना होमदानपरिग्रहः । यागो—देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छा, देवतोद्दे·

(१) तत्र—धर्मे ।

(२) यागादीति । आदिना होमदानपरिग्रहः । यागत्वं च देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छावत्त्वम् । देवतोद्देश्यकत्वं च देवतास्वत्ववाद्विशेष्यकत्वम् । शब्दमयी देवतेति पक्षे तु तस्या इदमित्यारोपज्ञानाविषयत्वमुद्देश्यत्वम् । होमत्वं चाग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारत्वम् । दानत्वं च मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागत्वमिति संप्रदायः ।

(३) अतिशयं—अपूर्वम् ।

श्यकत्वं-देवतास्वत्ववद्विशेष्यकत्वं, होमोऽग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिकं, दानं-मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वजनकत्यागो बोध्यः। अत्र सर्वत्र धर्मो-व्यापार आवश्यकः, अन्यथा चिराविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात्। ननु व्यापारान्तरकल्पनापेक्षया क्लृप्तत्वात् यागादिध्वंसस्यैव व्यापारत्वमास्ताम्। न चाभावस्य कारणत्वे कारणीभूताभावप्रतियोगित्वेन यागस्य प्रतिबन्धकत्वापत्तिः, प्रतिबन्धकलक्षणे संसर्गाभावत्वावच्छिन्नकारणत्वाश्रयीभूताभावप्रतियोगित्वस्य निवेशात्प्रकृते ध्वंसत्वेन हेतुताया अभावत्वनाकारणत्वादुक्तापत्तेरसम्भवात् कृतमदृष्टेनेत्यत आह-गङ्गास्नानादीति। सर्वाङ्गीणजलसंयोगलक्षणस्य स्नानस्य हि स्वर्गसाधनत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमेवापूर्वं कल्प्यते लाघवादिति भावः॥

ननु ध्वंसोऽपि न व्यापारोऽस्तु। न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्, अनन्यथासिद्धनियतपूर्ववर्तित्वस्य तत्रापि सत्त्वात्, अव्यवहितपूर्ववर्तित्वं हि चक्षुस्संयोगादेः कारणत्वे, न तु सर्वत्र, कार्यकालवृत्तित्वमिव समवायिकारकारणस्य कारणत्वे इत्यत आह—

कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः॥ १६२॥

कर्मनाशेति। यदि ह्यपूर्वं न स्यात्तदा कर्मनाशाजलस्पर्शादिना नाश्यत्वं धर्मस्य न स्यात्। नहि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति भावः। एतेन देवताप्रीतेरेव फलत्वमित्यपास्तम्—गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसम्भवात्, देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात्, प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात्, जन्यसुखादेस्तत्राभावात्। तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते॥१६१॥१६२॥

ननु व्यापारं विनाऽप्यनन्यथासिद्धनियतपूर्ववर्तित्वरूपकारणत्वाक्षतेः कथमपूर्वाङ्गीकारस्तत्राह—कर्मनाशेति। आदिना कीर्तना-

दिपरिग्रहः। असौ-धर्मः, तथाच कर्मनाशाजलस्पर्शादिनाश्यताव-च्छेदकनिर्वचनानुरोधेन धर्मसिद्धिः, यागस्य प्रागेव नष्टत्वात्, ध्वंसस्य ध्वंसासम्भवाद्धर्मत्वमेव नाश्यतावच्छेदकं तद्वान् धर्म इति भावः१६२॥

अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः।

अधर्म इति। नरकादिसकलदुःखानां नारकीयशरीरादीनां च साधनमधर्म इत्यर्थः॥

अधर्मं लक्षयति-अधर्म इति। नरकादीनां हेतुर्नरकाद्यसाधारणं कारणम्, नरकपदेनात्र दुःखमात्रस्यादिना नारकिशरीरादिपरिग्रहः। तथाच दुःखाद्यसाधारणकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं लक्षणं लब्धम्, तेन प्रायश्चित्तनाश्याधर्मे नाव्याप्तिरिति बोध्यम्। तत्र प्रमाणं दर्शयितुमाह-निन्दितकर्मज इति। शास्त्रप्रसिद्धकर्मजन्य इत्यर्थः। अत्रापि प्राग्वदधर्मो व्यापार आवश्यक इति भावः॥

तत्र प्रमाणमाह—

प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ॥ १६३॥

प्रायश्चित्तेति। यदि ह्यधर्मो न स्यात्तदा प्रायश्चित्तादिना नाश्यत्व-मधर्मस्य न स्यात्। न हि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते, तस्य पूर्वमेव विनष्टत्वादिति भावः॥ जीवेति। ईश्वरस्य धर्माधर्माभावादिति भावः॥ १६३॥

प्राग्वदेव व्यापारं विनापि निर्वाहमाशङ्क्याह—प्रायश्चित्तादीति। आदिना भोगपरिग्रहः। अत्रापि पूर्वोक्तरीत्या प्रायश्चितादिनाश्यता-वच्छेदकनिर्वचनानुरोधेनाधर्मसिद्धिः, ब्रह्महननादिक्रियायाः प्रागेव न-ष्टत्वात् ध्वंसस्य च ध्वंसासम्भवादधर्मत्वमेव नाश्यतावच्छेदकं त-द्वानधर्म इति भावः। जीवेति। ईश्वरस्य धर्माधर्माभावादिति भावः१६३

इमौ तु (१)वासनाजन्यौ ज्ञानादपि विनश्यतः।

इमौ-धर्माधर्मौ। वासनेति। अतो ज्ञानिना कृते अपि सुकृतदु-ष्कृतकर्मणी न फलायालमिति भावः॥ ज्ञानादपीति। अपिना भोग-

(१) ननु गङ्गादिदर्शनादिना ईश्वरे कुतो न धर्मादेरुत्पत्तिरत आह—वासनाजन्याविति। ई-श्वरे मिथ्याज्ञानजन्यवासनाविरहान्न धर्मादेरुत्पत्तिरिति भावः।

परिग्रहः । ननु तत्त्वज्ञानस्य कथं धर्माधर्मनाशकत्वं ? 'नाभुक्तं क्षीयते कर्म कल्पकोटिकशतैरपि' इति वचनविरोधात् , इत्थं च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेत् । न । तत्र भोगस्य वेदबोधितनाशकोपलक्षकत्वात् । कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः । तदुक्तम्—ज्ञानाग्निः (१)सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन इत्यादिना । श्रूयते च—

(२)क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । इति ॥

ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्याज्ज्ञानेन सर्वेषां कर्मणां नाशादिति चेत् । न । प्रारब्धेतरकर्मणामेव नाशात् । तत्तच्छरीरभोगजनकं हि यत्कर्म तत्प्रारब्धं, तदभिप्रायमेव नाभुक्तमिति वचनमिति ॥

ननु गन्धादिदर्शनादिना ईश्वरे कुतो न धर्मादिस्तत्राह—इमाविति । इमौ—धर्माधर्मौ । वासना अत्र संस्कारो न तु तत्त्वज्ञानप्रागभावः संस्कारस्यैव विरोधिविषयकत्वेन ज्ञाननाशकत्वसम्भवात् । तर्हि मिथ्याज्ञानजन्यत्वं विहाय वासनाजन्यत्वानुसरणं किमिति चेत् । शृणु—तथोक्तौ मिथ्याज्ञानस्य कर्मान्तरितस्याशुविनाशिनः स्वजन्यवासनासम्बन्धेन हेतुत्वं व्याख्येयं तदपेक्षया वासनाजन्यत्वकथनमेव लघु तावता च न कापि हानिरिति । स्यादेतत्—तथापि धर्माधर्मौ प्रति वासनायो हेतुत्वे किं मानमिति चेत् । "यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यत" इति श्रुत्या ज्ञानिकृतकर्मणां फलाभावश्रवणमेवेत्यवेहि । स्यादेतत्—तथापि सञ्चिताभ्यां तत्त्वविदफलं स्यादेव तत्राह—ज्ञानादपीति । अपिना भोगपरिग्रहः । तत्रापि प्रारब्धस्य भोगेनैव क्षयः "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति" प्रमाणात् अनारब्धकार्याणां तु आत्मतत्त्वज्ञानादपि क्षयो भवति ।

---

(१) सर्वकर्माणीति । सर्वकर्मजन्यादृष्टानीत्यर्थः ।

(२) स्मृतिं दर्शयित्वा श्रुतिं दर्शयति—क्षीयन्त इति ।

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इत्यादिश्रुतेस्तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादित्यादिसूत्रैरनारब्धनाशमात्रपरत्वसमर्थनेन तथावगमात् । नाशश्चात्र न यथाश्रुतोऽभिमतः, किन्तु स्वाश्रये फलाजनकत्वमेव "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति" श्रुत्या तत्त्वविद्धर्मादेरन्यत्र फलकथनादित्यास्तां विस्तरः । अत्राधर्मवद्धर्मनाशस्यापि फलत्वकथनं तु–'सर्वे पाप्मानो निवर्त्तन्त' इति श्रुत्या पापत्वेनोक्तसुकृतस्यापि मधुविषसम्पृक्तान्नभोजनवद्धेयत्वज्ञापनाय, अतएवोक्तं वृद्धैः—

पातकप्रचयवन्मम तावत्पुण्यपुञ्जमपि नाथ लुनीहि ।
काञ्चनी भवतु लोहमयी वा शृङ्खला तु पदयोर्न विशेषः ॥

इति । ननु तथापि 'तमेव विदित्वेत्यादि'श्रुत्या तत्त्वज्ञानस्यात्यन्तिकदुःखनिवृत्तिलक्षणमोक्षं प्रत्येव हेतुत्वकथनात्तद्विहाय कथमत्रादृष्टनाशार्थम्प्रत्येव हेतुत्वमुल्लिखितमिति चेत् । शृणु–अतीतदुःखस्यातीतत्वादेव वर्त्तमानस्य विरोधिगुणान्तरेणैव निवृत्तिसम्भवात्, अनागतस्य सिद्ध्यसिद्धिभ्यां निवृत्तेरनिर्वाच्यत्वात् हेतूच्छेद एव तत्फलमवश्यं वक्तव्यं, हेतुस्तु सवासनमिथ्याज्ञानं, तच्चादृष्टद्वारैव फलोपधायकमिति सहेतुकतन्नाशं प्रत्येव तथोक्तमिति । ननु कथं तत्त्वज्ञानं मुक्तिसाधनं अहमस्मीत्याद्यात्मप्रत्यक्षस्येदानीमपि जागरूकतया मुक्त्यनुदयाद्व्यभिचारस्य दुर्वारत्वादिति चेत्, न–मोक्षजनकतावच्छेदकवैजात्यावच्छिन्नसाक्षात्कारस्य निदिध्यासनपरिपाकहेतुकस्येदानीमभावेन तदभावाद् व्यभिचाराभावात् । स्यादेतत्–तथापि कीदृशात्मतत्त्वसाक्षात्कारो मुक्तिहेतुः किमात्ममात्रविषयकः किं वात्मा देहेन्द्रियादिभिन्न इत्याद्याकारः? नाद्यः–तस्य देहेन्द्रियादितादात्म्यप्रकारकमिथ्याज्ञानतज्जन्यसंस्कारयोरविरोधेनानिवर्त्तकत्वापत्तेः । नान्त्यः–'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथेत्यादि'श्रुतिबाधापत्तेरिति चेत् । अत्र वेदान्तिनः–निर्विकल्पकमेवात्मज्ञानं मुक्तिजनकं तमेवेत्येवकारेणात्मत्वादिविशिष्टसविकल्पकव्यवच्छेदात् । न च तस्य मिथ्याज्ञानाद्यविरोधः–श्रुतिबलेन निदिध्यासनजन्यस्य तस्य विजातीयस्य मणिमन्त्रादिन्यायेन तद्विरोधित्वकल्पना-

दिति प्राहुः। तार्किकास्तु आत्मा देहादीभिन्न इत्याद्याकारं सविकल्पकमेव ज्ञानं स्वात्मगोचरं मोक्षजनकं विरोधिविषयकत्वेन तस्यैव स्वाविद्योच्छेदक्षमत्वात्। न चैवं श्रुतिबाधः तात्पर्यपर्यालोचनः एवकारेण देहादिभेदविशिष्टसविकल्पान्यज्ञानस्यैव व्यवच्छेदात् तद्बाधादिति वदन्ति। ननु तथापि कथमुच्यते जीवात्मज्ञानं मोक्षसाधनं तमेवेत्यादौ तच्छब्देनेश्वरपरामर्शात्,—

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यन्ति॥

इत्यादिश्रुत्या 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति भगवदुक्त्या चेश्वरज्ञानस्यैव मोक्षहेतुत्वप्रतिपादनादिति चेत्। अत्र वदन्ति—ईश्वरविषयकज्ञानस्योपासनारूपस्य स्वजन्यादृष्टद्वारा मुक्तिजनकजीवात्मज्ञानप्रतिबन्धकासम्भावनादिनिराकरणेन जीवात्मज्ञान उपयोगो न साक्षान्मुक्तौ अविरोधेन मिथ्याज्ञानोच्छेदक्षमत्वाभावात्, तमेवेत्यादेस्तु तात्पर्यादिबलतो बुद्धिस्थत्वेन जीवपरामर्शकत्वमेव। किं विनिगमकमिति चेत्—'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवती'त्युपक्रम्य 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति वदन्ती श्रुतिरेव विनिगमकमिति गृहाण। ननु तथापि कथं ज्ञानादेव मोक्ष उच्यते 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इत्यादिश्रुत्या,—

तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने॥
उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गतिः॥

इति स्मृत्या च कर्मणोपि मोक्षसाधनत्वकथनादिति चेन्न।

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत्॥
अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः।

इत्यादिना कर्मणो ज्ञानप्रतिबन्धकाधर्मनाशद्वारा तत्त्वज्ञान एवोपक्षयप्रतिपादनात् "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरित्यादि" श्रुतिभिर्मोक्षहेतुत्ववर्जनाच्च तस्मात्कर्म ज्ञाने हेतुः ज्ञानं च मोक्ष इति सिद्धम्। एतेन काशीमरणात् मुक्तिरित्यादिकमपि व्याख्यातम्। अत्र हि 'जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे

येनासावमृतो भूत्वा मोक्षीभवतीत्यादि'श्रुत्या काशीमरणस्य ज्ञानं प्रत्येव हेतुताबोधनादित्याद्यन्यत्र विस्तरः ॥

शब्दं निरूपयति—

शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।

शब्द इति ।

नभोवृत्तिराकाशसमवेतः । दूरस्थशब्दस्याग्रहणादाह—श्रोत्रेति ।

ननु मृदङ्गावच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह-- वीचीति । आद्यशब्देन बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन (सदृशो) जन्यते । तेन चापरस्तद्व्यापकः । एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति ॥

शब्दं निरूपयति—शब्द इति। वर्णध्वनिभेदेन शब्दो द्विविध इत्यर्थः। ध्वनिं लक्षयति—मृदाङ्गादीति। आदिना वंशदलविभागजशब्दजयोः परिग्रहः। तथा च ध्वनिस्त्रिविधः। संयोगजो विभागजः शब्दजश्चेति। तत्राद्यो—कण्ठाद्यभिघातवीणाहस्तादिसंयोगजन्यः सङ्गीतशास्त्रसिद्धानेकभेदात्। द्वितीयः—वंशे पाट्यमाने वंशदलद्वयविभागजन्यश्चटचटाशब्दः। तृतीयो—मृदङ्गादिदेशमारभ्य श्रोत्रपर्यन्तं द्वितीयादिशब्दः। तथाचैवंविधजातीयशब्दत्वमेव ध्वनिलक्षणं बोध्यमिति भावः ॥ १६४ ॥

वर्णात्मकं निरूपयति—कण्ठसंयोगादीति। कण्ठताल्वादिसंयोगजन्य इत्यर्थः। आदिना ताल्वोष्ठपुटव्यापारादिपरिग्रहः। तथा चास्य ताल्वोष्ठपुटव्यापारासाधारणकारकशब्दत्वं लक्षणमिति भावः। उद्दिशति—कादय इति ॥

नभोवृत्तिः—आकाशसमवेतः। दूरस्थशब्दस्य ग्रहणादाह—श्रोत्रेति। एतेन वर्णध्वनिभेदेनोभयविधशब्दस्य श्रोत्रग्राह्यवृत्तिगुणत्वव्याप्यजातिमत्त्वं लक्षणमपि लब्धमिति मन्तव्यम् ॥ १६५ ॥

ननु मृदङ्गाद्यवच्छेदेनोत्पन्नस्य श्रोत्रे कथमुत्पत्तिस्तत्राह–वीचीति । स च न्याय इत्थं–आद्यशब्देन दिक्चतुष्टये एकः शब्दः एवं धारारूपेण श्रोत्रपर्यन्तं शब्दोत्पत्तिरिति ॥

कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥

कदम्बेति । आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते । तैश्चान्ये दश शब्दा उत्पद्यन्त इति भावः । अस्मिन्मते कल्पना गौरवादुक्तं—कस्यचिन्मत इति ॥ १६४ ॥ १६५ ॥ १६६ ॥

कदम्बेति । अयं च न्याय इत्थं–प्रथमशब्देन दिक्चतुष्टये शब्दचतुष्टयं तेन तथैव शब्दान्तरम् । एवंक्रमेण श्रोत्रपर्यन्तं शब्दोत्पत्तिरिति । केचित्तु यदा सर्वदिग्वर्त्तिवायुस्तदा वीचीतरङ्गन्यायः यदैकदिग्वर्त्तिवायुस्तदा कदम्बगोलकन्याय इति वदन्ति । अस्मिन् कल्पे गौरवादुक्तं–कस्यचिन्मत इति ॥ १६६ ॥

ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसङ्गतमत आह–

उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।

उत्पन्न इति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ॥

ननु शब्दस्य नित्यत्वात् तदुत्पत्तिकथनमसङ्गतमित्यत आह—उत्पन्न इति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ॥

ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम् , इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह–

सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥

सोऽयं क इति । साजात्यमिति । तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः—उक्तप्रतीतिविरोधात् । इत्थञ्च (१)द्वयोरपि प्रतीत्योर्न भ्रमत्वमिति ॥ १६७ ॥

ननु तर्हि सोयं ककार इत्यादिप्रत्यभिज्ञायां का गतिस्तत्राह—सोयमिति । साजात्यमिति । तज्जातीयोयमित्यर्थिका न तु तद-

---

(१) द्वयोरिति । उत्पादप्रतीति—प्रत्यभिज्ञानयोरित्यर्थः ।

भिन्न इत्यर्थिकेति भावः ॥ १६७ ॥

ननु सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह—

(१)तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यकृता कारिकावली समाप्ता ॥

तदेवेति ॥ यदौषधं मया कृतं तदेवान्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६८ ॥

इति श्रीमहामहोपाध्याय-विद्यानिवासभट्टाचार्यसुत-श्रीविश्वनाथपञ्चानन-भट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ॥



क एवं निर्णीतं? तत्राह—तदेवेति। यदौषधं मया पूर्वं भुक्तं तदेवेदानीं भुज्यत इत्यादिप्रत्यभिज्ञायाः सजातीयविषयावगाहित्वदर्शनादित्यर्थः। ननु तर्हि एतन्मते तज्जातीयोयमित्येवाकारः प्रत्यभिज्ञायाः स्यान्न तु सोयमिति वाच्यम्, यत्र प्रत्यभिज्ञायां जातित्वेन गत्वादेर्भानं तत्रैव तज्जातीयोयमित्याकारः, यत्र स्वरूपतो भानं तत्र सोयमित्येवाकार इत्यभ्युपगमादिति न कोपि विरोध इत्यास्तां विस्तरः ॥ अत्र वर्णानित्यत्वकथनं वेदकर्तृत्वेनेश्वरसिद्धिः, तद्भजनात् कृतार्थतेति ज्ञापनाय चेति सङ्क्षेपः ॥ १६८ ॥

इति श्रीनारायणतीर्थकृता भाषापरिच्छेदज्ञापिका
न्यायचन्द्रिका समाप्ता ॥

---

समाप्तोऽयं ग्रन्थः ।



---

(१) ननु तत्रापि व्यक्त्यभेद एव विषयोस्त्वतो भावार्थं प्रकाशयति-यदौषधं मया कृतमित्यादिना । अत्र स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासाहितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वान्न व्यक्त्यभेदो विषयः, किन्तु तत्सजातीयाभेदो विषय इति भावः ।

